वंध्यासंगो मंदे भानौ चन्द्रे दासीसमाश्रयः ॥ कुजे रजस्वलासंगो वंध्यासंगश्च कीर्तितः ॥ ८० ॥ बुधे वेश्यार्थहीना वा वणिक्स्त्री वा प्रकीर्तिता ॥ गुरौ ब्राह्मणभार्या स्याद्गर्भिणीसंगमो भृगौ ॥ ८१ ॥ हीना वा पुष्पिता वा स्यान्मंदराहुफणीश्वरैः ॥ राहौ च गर्भिणीसंगः कृष्णया कुब्जया शनौ ॥ ८२ ॥

सप्तम सूर्य होवे तो वांझ स्त्रीका संग करे, चंद्रमा होवे तो दासीका आश्रय लेवे, मंगलसे रजस्वला और वांझ स्त्रीका संग कहाहै ॥ ८० ॥ बुधसे वेश्या अथवा दरिद्रा ( भिखारिन ) यद्वा वनियेंकी स्त्रीसे, बृहस्पतिसे ब्राह्मणकी स्त्रीका संग, शुक्रसे गर्भिणीका संग ॥ ८१ ॥ शनि राहु केतुसे हीनजातिकी वा रजोवती स्त्रीका गमन करे, राहुसे गर्भिणी स्त्रीका संग, और शनिसे कालेरंगकी कुबरी कुरूपा स्त्रीसे भी संग करताहै ॥ ८२ ॥

एवं सुखस्थितैरेतैरीदृक्स्त्रीसंग ऊह्यताम् ॥ सूर्याद्यैः सुखगैर्वाच्यं वाहनं गृहनिर्णयः ॥ ८३ ॥ वनं गृहं च कुड्यं स्याद्विहारो देवतालयम् ॥ जलं हरिगजस्थानमिति स्थाननिरूपणम् ॥८४॥

इसीप्रकार उक्त ग्रह चतुर्थ स्थानमें होवें तो भी इसीप्रकार स्त्रीसंग जानना। सूर्यादि ग्रहोंमेंसे जो चतुर्थ स्थानमें हो उसके अनुसार वाहन तथा मकानका निर्णय कहना ॥ ८३ ॥ सूर्यसे वन, चंद्रमासे वस्तीमें, मंगलसे कुटिया, बुधसे विहारस्थान, गुरुसे देवालय, शुक्रसे जलस्थान, शनिसे सिंहव्याघ्रादि स्थान, राहु केतुसे गजस्थान इसप्रकार स्थानका निरूपण करना ॥ ८४ ॥

पापैर्युक्ते चतुष्केन्द्रे चतुष्पान्मैथुनं वदेत् ॥ पापैर्दृष्टेषु सर्वेषु केंद्रेष्वेवं विनिर्दिशेत् ॥ ८५ ॥ केन्द्रे कोणे पापयुते पशुवन्मैथुनं वदेत् ॥ मन्दे पापान्विते वापि समांदौ तादृशं वदेत् ॥८६॥

चारों केन्द्रोंमें पापग्रह होवें तो पशुके समान ( वा साथ ) मैथुन करनेवाला होवे ऐसा कहना, यदि चारों केन्द्र पापयुक्त होंवें तौभी ऐसाही फल कहना ॥ ८५ ॥ केन्द्र तथा त्रिकोण पापयुक्त होवें तो पशुसमान मैथुन कहना शनि पापयुक्त वा केतुयुक्त केन्द्र कोणमें होवे तौभी वही फल कहना ॥ ८६ ॥

मन्दे सूर्ये सुखे भौमे पशुवन्मैथुनं वदेत ॥ राहौ कलत्रे भौमे वा सुखे तादृशमैथुनम् ॥ ८७ ॥ मंदेशे भृगुसंदृष्टे भौमक्षेत्रगतेऽथ वा ॥ भृगुणा सहिते वापि भगचुम्बनभाग्भवेत् ॥ ८८ ॥

चौथे भावमें शनि सूर्य मंगळ हो तो पशुके तुल्य मैथुन कहना, राहु सप्तम वा मंगल चौथे होवै तो वैसाही मैथुन कहना ॥ ८७ ॥ जिस राशिमें शनि है उसका स्वामी शुक्रसे दृष्ट होवै अथवा मंगळके क्षेत्रमें हो अथवा शुक्रसे युक्त होवै तो भगका चुम्बन करनेवाला होवै॥८८॥

एवं कुटुम्बनाथेन भगचुंबनभाग्भवेत् ॥ ८९ ॥ कर्मेशे मन्दसंदृष्टे भौमक्षेत्रगतेऽथ वा ॥ भृगुणा सहिते वापि भगचुंबनभाग्भवेत् ॥ ॥ ९० ॥ लग्नेशे नीचराश्यादौ स्थिते तादृशचुम्बनम् ॥ एवं कुटुम्बनाथेन भगचुम्बनभाग्भवेत् ॥ ९१ ॥ कुजे कृशस्तनी मंदे राह्वादौ लंबनस्तनी ॥ कठिनोर्ध्वकुचा भानौ शेषैः स्थूलोत्तमस्तनी ॥ ९२ ॥

इसीप्रकार द्वितीयेशसे भग चुम्बन वाला होताहै ॥ ८९ ॥ दशमेश शनिसे दृष्ट अथवा मंगलके राशिमें वा शुक्र सहित होवै तो भग चुम्बनवाला होवै ॥ ९० ॥ लग्नेश नीच राशि आदिमें हो तोभी वैसाही चुम्बन करे। ऐसेही कुटुम्बेशसेभी भग चुम्बनवाला होवै ॥ ९१ ॥ मंगलसे पतले स्तनवाली, शनि राहु आदिसे लंबे स्तनवाली सूर्यसे कडे एवं ऊंचे स्तनवाली अन्यग्रहोंसे स्थूल और उत्तम स्तनोंवाली होतीहै ॥ ९२ ॥

पापेनैकेन सहिते विलक्षणकुचा भवेत् ॥ दारेशे पापखेटे वा शुभे वा तादृशस्तनी ॥९३॥ शुभद्वयेन सहिते दारेशेऽपि तथाविधे ॥ समस्तनी भवेत्पत्नी पापयोगेऽन्यथा भवेत् ॥ ९४ ॥ अतिस्थूलस्तनी पत्नी सशुभे दारनायके ॥ जलगेहे जलर्क्षस्थे गुरुणापि निरीक्षिते ॥ ९५ ॥

एक पापग्रहसे युक्त होवै तो विलक्षण स्तनवाली होवै, सप्तमेश पाप वा शुभ पापयुक्त नीचादिगत होवै तो वैसाही फल होगा ॥ ९३ ॥ दो शुभग्रहोंसे सहित हो सप्तमेशभी वैसाही होवै तो स्त्री समान स्तनवाली होवे पापयुक्त होवै तो समस्तनी न होवै ॥ ९४ ॥ सप्तमेश शुभयुक्त होवै तो अतिस्थूल स्तनवाली होवै जलराशिमें चतुर्थस्थानगत होवै बृहस्पतिभी उसे देखे तोभी वही फलहोगा ॥ ९५ ॥

रवौ वा भूमिपुत्रे वा मन्दमान्दिगुसंयुते ॥ दाराधिपे पापभागे भगदैर्घ्यं विनिर्दिशेत् ॥ ९६ ॥ तदीशौ गुरुशुक्रौ वा शुभांशसहितौ यदा ॥ समं भगं भवेत्तस्याः [illegible] तु दीर्घकम् ॥९७॥

शनिचन्द्रविदां मध्ये यत्रैकस्मिन्मदेश्वरे ॥ ह्रस्वं भगं समादिष्टं स्त्रियामेवं विनिर्दिशेत् ॥ ९८ ॥

सूर्य अथवा मगल, शनि, केतु, राहुयुक्त होवें सप्तमेश पापांशकमें होवै तो भग दीर्घ होवै ॥ ९६ ॥ सप्तमेश गुरु वा शुक्र यदि शुभग्रहोंके अंशमें हों तो उस स्त्रीका भग सम होवै-पापयुक्त होवें तो दीर्घभग होवै ॥ ९७ ॥ शनि चंद्रमा बुधमेंसे एक सप्तमेश होवै तो छोटा भग कहाहै इसप्रकार स्त्रियोंके ग्रहोंका विचार करना ॥ ९८ ॥

कलत्रेशे जलर्क्षस्थे कारके वा तथाविधे ॥ जलर्क्षे दारभावे वा पूर्णचन्द्रनिरीक्षिते ॥ ९९ ॥ चन्द्रे जलर्क्षेदारस्थे जलस्थभृगुवीक्षिते॥ जलर्क्षस्थविदा दृष्टे स्त्रीगुह्यस्यार्द्रता भवेत् ॥१००॥ पूर्णे शशांके दारस्थे जलराश्यंशकेऽपि वा ॥ जलस्थगुरुसंदृष्टे सततं त्वार्द्रता भवेत् ॥ १०१ ॥ परमोच्चांशके शुक्रे जलराशिगतेपि वा ॥ भानुनासंयुते वापि मैथुनादेव तादृशम् ॥ १०२ ॥

सप्तमेश जलराशिमें सप्तमकारकभी जलराशिमे हो वा सप्तम भावमें जलराशि पूर्ण चद्रसे दृष्ट होवै स्त्रीका भग गीला शीघ्र होवै ॥ ९९ ॥ चन्द्रमा जलराशिमें सप्तम होवै उसे शुक्र देखे जलराशिस्थ बृहस्पतिसे भी दृष्ट होवै तो स्त्रीके गुह्यस्थानमें गीलापन रहे ॥ १०० ॥ पूर्ण चन्द्रमा सप्तममें जलराशि वा जलराश्यंशकका होवै जलराशिस्थ गुरु उसे देखे तो सर्वदा भगमें गीलापन रहे ॥ १०१ ॥ शुक्र परमोच्चांशकमें हो अथवा जलराशिमें हो सूर्यसे युक्त होवै तो मैथुनसेभी तादृशह भग होवै ॥ १०२ ॥

दारेशे शुष्कराशिस्थे दारे वा शुष्कसंज्ञके ॥ शुष्कग्रहेण संयुक्ते त्वनार्द्रं गुह्यमादिशेत् ॥१०३॥पापक्षेत्रे पापमध्ये दारेशेपि तथाविधे ॥ पापदृग्योगसंपाते त्वनार्द्रं गुह्यमादिशेत् ॥ १०४ ॥

सप्तमेश ( शुष्क ) स्थल चरराशिमें वा सप्तममें शुष्कराशि शुष्कग्रह होवै तो गुह्यस्थान गीला न रहे ऐसा कहना ॥ १०३ ॥ पापग्रहकी राशिमें पापग्रहोंके बीच ऐसाही सप्तमेश होवै पापग्रहकी दृष्टि वा योग होवै तोभी वैसाही कहना ॥ १०४ ॥

सप्तमेशे बुधे दृष्टे गुरुणा बलसंयुते ॥ भुक्तीशेनापि संदृष्टे सूपदध्याज्यभाग्भवेत् ॥ १०५ ॥ सप्तमेशे गुरौ दृष्टे शोभनांशसमन्विते ॥ सौम्यांशसौम्यसंदृष्टे सूपदध्याज्यभाग्भवेत ॥ १०६ ॥

सप्तमेश बुध गुरुसे दृष्ट एवं बळवान् होवै द्वितीयेशसे भी दृष्ट होवै तो. दाळ दही घी आदि खानेवाला होवै ॥ १०५ ॥ सप्तमेश गुरु द्वितीयेशसे दृष्ट शुभांशकमें तथा बुधके नवांशमें बुधसे दृष्ट होवै तौभी वह फल कहना ॥ १०६ ॥

दारस्थे भृगुपुत्रे वा पूर्णचन्द्रनिरीक्षिते ॥ पापैरयुक्ते दृष्टे वा सूपदध्याज्यभाग्भवेत् ॥ १०७ ॥ रवौ वा भूमिपुत्रे वा सप्तमेशे-शुभेक्षिते ॥ भुक्तिस्थानगते वापि कदाचिद्दधिसूपभाक् ॥ १०८ ॥

अथवा सप्तम शुक्र पूर्णचन्द्रमासे दृष्ट तथा पापग्रहोंसे युक्त दृष्ट न होवै तो दाल दही घी आदि खानेवाला होवै ॥ १०७ ॥ सूर्य अथवा मंगल सप्तमेश हो शुभग्रहदृष्ट हो अथवा दूसरे स्थानमें होवै तो दही दाल कदाचित् खावै ॥ १०८ ॥

पापे सप्तमभावस्थे तदीशे पापसंयुते ॥ क्रूरषष्ट्यंशके वापि घृतसूपादिहीनभाक् ॥ १०९ ॥ चन्द्रे गुरौ वा दारेशे जलराश्यंशसंभवे ॥ जलग्रहेण वा दृष्टे क्षीरपानादिभाग्भवेत् ॥ ११० ॥ सप्तमेशस्थितांशेशे शुभदृष्टिसमन्विते ॥ शुभग्रहांशके वापि गुडक्षीरादिपानभाक् ॥ १११ ॥

सप्तममें पापग्रह हो सप्तमेश पापयुक्त हो अथवा क्रूरषष्ट्यंशकमें होवै तो घृत दाल आदि से रहित भोजन करे ॥ १०९ ॥ चंद्रमा वा बृहस्पति सप्तमेश होकर जलचर राशि वा अंशकमें हो अथवा जळधातुवाले ग्रहसे दृष्ट होवै तो दुग्ध आदि पीनेवाला होवै ॥ ११० ॥ सप्तमेश जिसके अंशकमें है वह शुभ दृष्ट होवै अथवा शुभांशकमें होवै तो गुड दूध आदि उत्तम पदार्थ पान करनेवाला होवै ॥ १११ ॥

बहवः सप्तमे पापाः षष्ठे वा रन्ध्रभेपि वा ॥ क्रूरषष्ट्यंशसंयुक्ता मूत्रकृच्छ्रं विनिर्दिशेत् ॥ ११२ ॥ इति सप्तमभावस्थनिश्चितार्थविचारयुक् ॥षष्ठाध्यायो मया प्रोक्तो व्यंकटेशेन धीमता॥ ११३ ॥

इति श्रीसर्वार्थचिन्तामणौ सप्तमभावफलविचारो नाम षष्ठोऽध्यायः ॥ ६ ॥

सप्तम स्थानमें बहुत पापग्रह हों अथवा छठे वा अष्टममें हों, क्रूर षष्ट्यंशकसंयुक्त होवें तो मूत्रकृच्छ्र रोग कहना ॥ ११२ ॥ मैं धीमान् व्यंकटेशने इसप्रकार सप्तमभावस्थ निश्चित फल विचार चित्र अर्थवाला छठा अध्याय कहाहै ॥ ११३ ॥

इति श्रीसर्वार्थचिंतामणौ माहीधरभाषाटीकायां सप्तमभावफलविचाराध्यायः षष्ठः ॥ ६ ॥

# सप्तमोऽध्यायः ॥ ७ ॥

अथायुर्धर्मभावफलविचाराध्यायः ।

मरणाज्जीवितमरणं गुह्यस्थानं च मरणहेतुं च ॥
अन्नसुखं भृतिदंशं परिभवमपि चिंतयेत्प्राज्ञः ॥ १ ॥

मरणसे जीवन और मरण, गुह्यस्थान, मरणका हेतु, अन्नसुख, भृति, दश, हारजानाभी अष्टम भावसे विचारने । इनको खुलासा आगे कहेंगे ॥ १ ॥

रन्ध्रेश्वरे पापयुतेंत्यराशावल्पायुरस्येति वदंति षष्ठे ॥ तत्रापि लग्नेश्वरयोगजातः स्वल्पायुरस्येति वदंति संतः ॥ २ ॥

अष्टमेश पापयुक्त बारहवें वा छठे होवै तो इस मनुष्यकी अल्पायु होगी, तहां लग्नेशसेभी युक्त होवै तो विद्वान् इसकी थोडी आयु कहते हैं ॥ २ ॥

स्वक्षेत्रसंस्थे यदि रंध्रनाथे दीर्घायुराहुर्मुनयो महान्तः ॥ मदेन वाचिन्त्य विशेषमायुः स्वक्षेत्रमित्रोच्चगृहस्थितेन ॥ ३ ॥ रन्ध्रेश्वरेणापि विलग्ननाथे युते रिपौ वा व्ययराशियुक्ते ॥ षष्ठांत्यपे वा यदि लग्नयुक्ते दीर्घायुरस्येति शुभेक्षितश्चेत् ॥ ४ ॥

अष्टमेश अपने क्षेत्रमें होवै तो बडे मुनिजन इसकी दीर्घायु कहतेहैं अथवा सप्तम भावसे अपनी राशि मित्रकी राशि और उच्चराशि स्थित ग्रहके अनुसार दीर्घायु विशेष जाननी ॥ ३ ॥ अष्टमेशसे युक्त लग्नेश छठे वा बारहवें होवै और षष्ठेश व्ययेश लग्नमें होवैं शुभग्रह उनको देखें तो मनुष्यकी दीर्घायु होगी ॥ ४ ॥

कर्मेश्वरेणापि विचिन्त्यमायुर्दीर्घं सुहृत्स्वोच्चयुतेन तेन ॥ केन्द्रस्थितैः कर्मविलग्नरन्ध्रनाथैस्तथैवायुरुदाहरन्ति ॥ ५ ॥ प्रोक्तं ग्रहैर्व्योमचरैस्त्रिभिर्वा सभानुजैः केंद्रगतैस्तथैव ॥ स्वक्षेत्रकोणादिगतैर्विशेषाद्वदन्ति दीर्घायुरुदारचित्ताः ॥ ६ ॥

ऐसेही मित्र उच्च स्वगृहादिस्थित दशमेशसेभी दीर्घायुका विचार करना दशम लग्न और अष्टम भावके स्वामी केन्द्रमें होवैं तो वैसेही दीर्घायु कहनी ॥ ५ ॥ तीन ग्रह दशममें हों वा तीनों शनियुक्त अन्य केंद्रमें हों तो भी उदारबुद्धिवाले दीर्घायु कहतेहैं ॥ ६ ॥

केन्द्रान्विते विलग्नेशे गुरुशुक्रसमन्विते ॥ ताभ्यां निरीक्षिते वापि दीर्घमायुर्विनिर्दिशेत् ॥ ७ ॥ चतुरस्रे शुभैर्युक्ते लग्नेशे शुभसंयुते॥ गुरुणा दृष्टिसंयोगे पूर्णमायुर्विनिर्दिशेत् ॥ ८ ॥ त्रिषडायगताः पापाः शुभाः केंद्रत्रिकोणगाः ॥ लग्नेशे बलसंयुक्ते पूर्णमायुर्विनिर्दिशेत् ॥ ९ ॥

लग्नेश केन्द्रमें गुरु शुक्र सहित वा इनसे दृष्ट होवै तो दीर्घायु कहनी ॥ ७ ॥ केंद्रोंमें शुभग्रह लग्नेश शुभयुक्त बृहस्पतिसे दृष्ट होवै तो पूरी आयु कहनी ॥ ८ ॥ पापग्रह तीसरे छठे ग्यारहवें में शुभग्रह केन्द्र कोणोंमें हों और लग्नेश बलवान् होवै तो पूर्ण आयु कहनी ॥ ९ ॥

षट्सप्तरन्ध्रभावेषु शुभेषु सहितेषु च ॥ त्रिषडायेषु पापेषु पूर्णमायुर्विनिर्दिशेत् ॥ १० ॥ रंध्राधिपे विलग्नस्थे गुरुशुक्रयुतेक्षिते ॥ लग्नेशे केन्द्रभावे वा दीर्घमायुर्विनिर्दिशेत् ॥ ११ ॥ उच्चाश्रितैस्त्रिभिःखेटैर्लग्ने रन्ध्रेशसंयुते ॥ रंध्रे पापविहीने तु दीर्घमायुर्विनिर्दिशेत् ॥ १२ ॥

छठे सातवें और आठवें भावमें शुभग्रह हों ३।६।११ में पापग्रह हों तो पूर्णायु कहनी ॥ १० ॥ अष्टमेश लग्नमें गुरु शुक्रसे युक्त वा दृष्ट होवै वा लग्नेश केन्द्र भावमें होवै तो दीर्घायु कहनी ॥ ११ ॥ तीन ग्रह उच्चके हों अष्टमेश लग्नमें हो और अष्टममें कोई पापग्रह न होवै तो दीर्घायु कहनी ॥ १२ ॥

रन्ध्रस्थितैस्त्रिभिः खेटैः स्वोच्चमित्रस्वगेहगैः ॥ लग्नेशे बलसंयुक्ते दीर्घमायुर्विनिर्दिशेत् ॥ १३ ॥

अष्टम भावमें तीन ३ ग्रह हों और वे अपने उच्च मित्र अथवा राशिमें होवें अर्थात् अष्टम भाव उन ग्रहोंके उच्चादिमेंसे कोई होवै, और लग्नेश बलवान् होवै तो दीर्घायु कहनी ॥१३॥

पारावतादिभागस्थाः पापाः सर्वेशुभास्तथा ॥ केन्द्रत्रिकोणनिलयाः पूर्णमायुर्विनिर्दिशेत् ॥१४॥ षष्ठाष्टमे व्यये पापे लग्नेशे दुर्बले यदि ॥ अल्पायुरनपत्यो वा शुभदृग्योगवर्जिते ॥१५॥(१६)

संपूर्ण पाप तथा शुभग्रह पारावतादि अंशकोंमें केंद्र त्रिकोण गत होवें तो पूर्णायु कहनी ॥ १४ ॥ छठे आठवें और बारहवें भावमें पापग्रह हों लग्नेश निर्बल होवै शुभग्रहोंसे युक्त वा दृष्ट न हों तो अल्पायु वा अपुत्र होवै ॥ १५ ॥ ( १६ )

चतुष्टयगते पापे शुभदृष्टिविवर्जिते ॥ बलहीने विलग्नेशे स्वल्पमायुर्विनिर्दिशेत् ॥ १७ ॥ व्ययार्थौ पापसंयुक्तौ शुभदृष्टिविवर्जितौ ॥ क्रूरषष्ट्यंशके वापि स्वल्पमायुर्विनिर्दिशेत् ॥ १८ ॥

केंद्रमें पापग्रह शुभग्रहदृष्टि रहित होवै तथा लग्नेश बलहीन होवै तो अल्पायु कहनी ॥१७॥ बारहवा और दूसरा भाव पापयुक्त शुभदृष्टिरहित हों अथवा क्रूर षष्ट्यंशकमें होवे तो अल्पायु कहनी ॥ १८ ॥

आयुर्योगास्त्रिधा प्रोक्ताः स्वल्पमायुश्चिरायुपः ॥ द्वात्रिंशत्पूर्वमल्पायुर्मध्यमायुर्विनिर्दिशेत् ॥ १९ ॥ सप्तत्याः प्राक् ततः पूर्णमायुरत्र वदंति हि॥अल्पायुर्दिननाथस्य शत्रुर्लग्नाधिपो यदि॥२०॥

अल्प मध्य दीर्घ भेदसे आयुके तीन भेद हैं। ३२ वर्षसे पहिले अल्प, ७० वर्षसे पूर्व मध्य इससे ऊपर पूर्णायु कहतेहैं ॥ लग्नेश सूर्यका शत्रु होवै तो अल्पायु होवै ॥ १९ ॥ २० ॥

समत्वे मध्यमायुः स्यान्मित्रे दीर्घायुरादिशेत् ॥ बलहीने विलग्नेशे जीवे केन्द्रत्रिकोणगे ॥ २१ ॥ षष्ठाष्टमव्यये पापे मध्यमायुरुदाहृतम् ॥ शुभे केन्द्रत्रिकोणस्थे शनौ बलसमन्विते ॥२२॥ षष्ठे वाप्यष्टमे पापे मध्यमायुरुदाहृतम् ॥ लग्ने त्रिकोणे केन्द्रे वा मध्यमायुश्च मिश्रिते ॥ २३ ॥

लग्नेश सूर्यका सम होवै तो मध्यमायु, मित्र होवै तो दीर्घायु कहनी । लग्नेश निर्बल होवै बृहस्पति केंद्र वा त्रिकोणमे होवै और छठे आठवे बारहवे मे पापग्रह होवै तो मध्यायु कहाहै। केंद्र त्रिकोणमें शुभग्रह हों शनि बलवान् हो छठे अथवा आठवें पापग्रह होवै अथवा लग्न त्रिकोण केन्द्रमे पापग्रह होवै तो मध्यमायु होवै, उक्तयोगमिश्रित हो तोभी मध्यायु होवै ॥ २१ ॥ २२ ॥ २३ ॥

अल्पायुर्योगजातानां वियत्पाको मृतिप्रदः ॥ मध्यमे प्रत्यरिदशा मृतिं दद्याद्विशेषतः ॥ २४ ॥ वधभेशदशा कष्टा पूर्णायुर्योगसंज्ञके ॥ योगायुरिति निश्चित्य जातस्यैवं वदेद्बुधः ॥ २५ ॥

जिनके अल्पायु योग होतेहै उनको विपत् नक्षत्रेश दशा, मध्यमायुवालेको प्रत्यरितारेश दशा, और विशेषकरिके पूर्णायुयोगमें वधनक्षत्रेशदशा मृत्यु देतीहै, इसप्रकार योगायु निश्चय करके पढित आयु कहे ॥ २४ ॥ २५ ॥

आयुर्विलग्नाधिपती बलेन हीनौ धरासूनुरणेशयुक्तौ ॥ युद्धे मृतिं तस्य वदन्ति तज्ज्ञाः शस्त्रेण वा तन्मरणं विशेषात् ॥ २६ ॥ रंध्रांगनाथौ यदि वा रिपुस्थौ राह्वन्वितौ केतुयुतौ समंदौ ॥ तद्भुक्तिकालेप्यथ वापि पाके शस्त्रेण चौरैर्मरणं प्रयाति ॥ २७ ॥

अष्टमेश और लग्नेश बलरहित होवैं तथा मंगल एवं षष्ठेशसे युक्त होवैं तो ज्योतिषज्ञ उसकी मृत्यु रणमें; विशेषतः शस्त्रसे कहतेहैं ॥ २६ ॥ यदि लग्नेश अष्टमेश छठे स्थानमें शनि तथा राहु वा केतु सहित होवे तो उसकी दशा अथवा अंतर्दशामें शस्त्रसे चोरोंके हाथसे मरे ॥ २७ ॥

रन्ध्रांगपौ वाहननाथयुक्तौ तस्मान्मृतिं तस्य वदंति तज्ज्ञाः ॥ मृतिं त्वजीर्णाद्गुरुसंयुतौ तौ देहेशजीवौ रिपुगावजीर्णात् ॥२८॥ लग्नेश्वरे वाहननाथयुक्ते वागीश्वरेणापि युते त्वजीर्णात् ॥ देहेश्वरे वाहनवित्तभावनाथान्विते वा मरणं त्वजीर्णात् ॥ २९ ॥ रन्ध्रेशयोगान्मरणं दशायामन्तर्दशायामथ वा वदन्ति ॥ पित्रादिभावाधिपयोगदृष्टया पित्रादिकानां मरणं तथैव ॥ ३० ॥

अष्टमेश लग्नेश चतुर्थेशसे युक्त होवें तो वाहनसे मृत्यु कहतेहैं । यदि वही लग्नेश अष्टमेश बृहस्पतिसे युक्त होवे तो अजीर्णसे मृत्यु होवै । तथा लग्नेश और बृहस्पति छठे हो तौ भी अजीर्णसे ज्योतिषी मृत्यु कहतेहैं ॥ २८ ॥ लग्नेश चतुर्थेशसे तथा बृहस्पतिसेभी युक्त होवे तो अजीर्णसे मृत्यु होवे । लग्नेश, चतुर्थेश, द्वितीयेशसे युक्त होवै तोभी अजीर्णसे मृत्यु होवे ॥ २९ ॥ अष्टमेशके योगसे उसकी दशा वा अंतर्दशामें मरण कहतेहैं । ऐसेही पित्रादिभावेशोंकी दृष्टि वा योगसेभी पिता आदिका मरण कहना ॥ ३० ॥

भुक्त्यंगपौ भानुसुतेन युक्तौ दुःस्थानगौ वा विषभक्षणेन ॥ राहुध्वजाभ्यां सहितौ च दुःस्थावुद्बंधनात्तस्य मृतिं वदंति॥३१॥ षष्ठेश्वरे भानुसुते-सराहौ केतौ मृगाद्भीतिमुदाहरन्ति ॥ जीवेन-युक्ते गजभीतिमस्य जातस्य चन्द्रेण युतेश्वभीतिम् ॥ ३२ ॥ सूर्यान्विते तादृशभानुपुत्रे मृगात्सशृंगाच्छुनकात्सभौमे ॥ षष्ठस्थिते भानुसुतेपि चैवं विना स्वतुंगस्वगृहं सुखेटे ॥ ३३ ॥

दशमेश लग्नेश शनिसहित दुष्टस्थानमें होवें तो विषपानसे मृत्यु होवे । यदि राहु वा केतुसे युक्त दुष्ट स्थानमें होवें तो फांसीसे मरण होवै ॥ ३१ ॥ षष्ठेश शनि

राहु वा केतु सहित होवे तो मृगसे भय कहतेहैं । बृहस्पतिसे युक्त होवे तो हाथीसे और चंद्रमासे युक्त होवे तो घोडेसे भय कहतेहैं ॥ ३२ ॥ वैसाही शनि सूर्यसे युक्त होवै तो शींगवाले मृगसे और भौमयुक्त होवे तो कुत्तासे भय होवै. छठे स्थानमें शनि होवे तोभी यही फल जानना इन योगोंमें योगकर्त्ता ग्रह अपने उच्चराशि स्वराशि का न हो तब उक्त फल होंगे ॥ ३३ ॥

सुखेशभाग्येशविलग्ननाथास्त्रिकोणगाः केन्द्रगताश्च सर्वे ॥ युक्तौ यदा तत्परिपाककाले पित्रा सहैवानुमृतिं च मातुः ॥३४॥ रन्ध्रे शशांके फणिनाथयुक्ते हीने त्वपस्मारयुतः समन्दे ॥ तत्र स्थिते हीनबले शशांके पिशाचपीडा जलजा च पीडा ॥ ३५ ॥ भौमाहिमन्दान्यतमेन युक्ते क्षीणे शशांके निधनस्थितेपि ॥ दुःस्थे त्वपस्मारभयान्मृतिः स्यात्पिशाचाबधा त्वथ वा मृतिः स्यात् ॥ ३६ ॥रन्ध्रे सराहौ यदि वा सकेतौ चातुर्थिकात्पीडनमाहुरस्य ॥ रन्ध्रेश्वरेणापि युते तथैवं क्रूरादिषष्ट्यंशयुतेतिसत्यम् ॥ ३७ ॥ नीचस्थिते वासरनायके वा षष्ठाष्टमस्थे यदि पापदृष्टे ॥ राज्ञां प्रकोपान्मरणं पितुश्च तत्पीडया वित्तविनाशमेति ॥ ३८ ॥

चतुर्थेश नवमेश और लग्नेश त्रिकोण वा केन्द्रमें होवें उनकी दशा अंतर्दशा समयमें पिताके साथ माताकीभी मृत्यु होवै ॥ ३४ ॥ अष्टम भावमें चंद्रमा राहुयुक्त तथा बलहीन होवै तो अपस्मार ( मृगीरोग ) होवै अष्टमस्थ निर्बल चन्द्रमा शनिसहित होवै तो पिशाच और जलसे उत्पन्न पीडा होवै ॥ ३५ ॥ ऐसाही चन्द्रमा क्षीण (तनु) मंगल, राहु शनिमेंसे किसीसे युक्त अष्टमस्थ होवै तो भी वही फल कहना । ऐसा चन्द्रमा यदि अन्य दुष्टस्थानमें होवैतो पिशाचकी पीडा अथवा मृत्यु होवै ॥ ३६ ॥ अष्टमस्थ चन्द्रमा राहु वा केतु सहित होवै तो चौथिया ज्वरसे पीडा इसको होवै अष्टमेशसे युक्तभी होवै तो वही फल होगा यदि क्रूरादिषष्ट्यंशमें भी होवै तो वह फल अतिसत्य ( अवश्य ) ही होगा ॥ ३७ ॥ सूर्य नीच राशिमें होवै अथवा छठे वा आठवें भावमें पापदृष्ट होवै तो राजाओंकी पीडासे मरण एवं पिताका मरण एवं धननाशभी होवै ॥ ३८ ॥

अथ केचिदरिष्टयोगाः ॥ लग्नाच्छुभे कर्मणि भूमिपुत्रे पापेक्षिते मातुलमृत्युमाहुः ॥ मन्देन युक्ते यदि पुत्रमृत्युं चन्द्रे हि तन्मा-

आयुर्विलग्नाधिपती बलेन हीनौ धरासूनुव्रणेशयुक्तौ ॥ युद्धे मृतिं तस्य वदन्ति तज्ज्ञाः शस्त्रेण वा तन्मरणं विशेषात् ॥ २६ ॥ रंध्रांगनाथौ यदि वा रिपुस्थौ राह्वन्वितौ केतुयुतौ समंदौ ॥ तद्भुक्तिकालेप्यथ वापि पाके शस्त्रेण चौरैर्मरणं प्रयाति ॥ २७ ॥

अष्टमेश और लग्नेश बलरहित होवैं तथा मंगल एवं षष्ठेशसे युक्त होवैं तो ज्योतिषज्ञ उसकी मृत्यु रणमें; विशेषतः शस्त्रसे कहतेहैं ॥ २६ ॥ यदि लग्नेश अष्टमेश छठे स्थानमें शनि तथा राहु वा केतु सहित होवे तो उसकी दशा अथवा अंतर्दशामें शस्त्रसे चोरोंके हाथसे मरे ॥ २७ ॥

रन्ध्रांगपौ वाहननाथयुक्तौ तस्मान्मृतिं तस्य वदंति तज्ज्ञाः ॥ मृतिं त्वजीर्णाद्गुरुसंयुतौ तौ देहेशजीवौ रिपुगावजीर्णात् ॥२८॥ लग्नेश्वरे वाहननाथयुक्ते वागीश्वरेणापि युते त्वजीर्णात् ॥ देहेश्वरे वाहनवित्तभावनाथान्विते वा मरणं त्वजीर्णात् ॥ २९ ॥ रन्ध्रे-शयोगान्मरणं दशायामन्तर्दशायामथ वा वदन्ति ॥ पित्रादि-भावाधिपयोगदृष्ट्या पित्रादिकानां मरणं तथैव ॥ ३० ॥

अष्टमेश लग्नेश चतुर्थेशसे युक्त होवे तो वाहनसे मृत्यु कहतेहैं । यदि वही लग्नेश अष्टमेश बृहस्पतिसे युक्त होवे तो अजीर्णसे मृत्यु होवै । तथा लग्नेश और बृहस्पति छठे हो तौ भी अजीर्णसे ज्योतिषी मृत्यु कहतेहैं ॥ २८ ॥ लग्नेश चतुर्थेशसे तथा बृहस्पतिसेभी युक्त होवै तो अजीर्णसे मृत्यु होवे । लग्नेश, चतुर्थेश, द्वितीयेशसे युक्त होवै तोभी अजीर्णसे मृत्यु होवे ॥ २९ ॥ अष्टमेशके योगसे उसकी दशा वा अंतर्दशामें मरण कहतेहै । ऐसेही पित्रादिभावेशोंकी दृष्टि वा योगसेभी पिता आदिका मरण कहना ॥ ३० ॥

भुक्त्यंगपौ भानुसुतेन युक्तौ दुःस्थानगौ वा विषभक्षणेन ॥ राहुध्वजाभ्यां सहितौ च दुःस्थावुद्बंधनात्तस्य मृतिं वदंति॥३१॥ षष्ठेश्वरे भानुसुते सराहौ केतौ मृगाद्भीतिमुदाहरन्ति ॥ जीवेन-युक्ते गजभीतिमस्य जातस्य चन्द्रेण युतेर्क्षभीतिम् ॥ ३२ ॥ सूर्यान्विते तादृशभानुपुत्रे मृगात्सशृंगाच्छुनकात्सभौमे ॥ षष्ठ-स्थिते भानुसुतेपि चैवं विना स्वतुंगस्वगृहं सुखेटे ॥ ३३ ॥

दशमेश लग्नेश शनिसहित दुष्टस्थानमें होवैं तो विषखानेसे मृत्यु होवे । यदि राहु वा केतुसे युक्त दुष्ट स्थानमें होवे तो फांसीसे मरण होवै ॥ ३१ ॥ षष्ठेश शनि

राहु वा केतु सहित होव तो मृगस भय कहतेहै । बृहस्पतिसे युक्त होवे तो हाथीसे और चंद्रमासे युक्त होव तो घोडेसे भय कहतेहैं ॥ ३२ ॥ वैसाही शनि सूर्यसे युक्त होवै तो शींगवाले मृगसे और भौमयुक्त होवे तो कुत्तासे भय होवै. छठ स्थानमें शनि होवे तोभी यही फल जानना इन योगोंमें योगकर्त्ता ग्रह अपने उच्चराशि स्वराशि का न हो तब उक्त फल होंगे ॥ ३३ ॥

सुखेशभाग्येशविलग्ननाथास्त्रिकोणगाः केन्द्रगताश्च सर्वे ॥ भुक्तौ यदा तत्परिपाककाले पित्रा सहैवानुमृतिं च मातुः ॥३४॥ रन्ध्रे शशांके फणिनाथयुक्ते हीने त्वपस्मारयुतः समन्दे ॥ तत्र स्थिते हीनबले शशांके पिशाचपीडा जलजा च पीडा ॥ ३५ ॥ भौमाहिमन्दान्यतमेन युक्ते क्षीणे शशांके निधनस्थितेपि ॥ दुःस्थे त्वपस्मारभयान्मृतिः स्यात्पिशाचबाधा त्वथ वा मृतिः स्यात् ॥ ३६ ॥रन्ध्रे सराहौ यदि वा सकेतौ चातुर्थिकात्पीडनमाहुरस्य ॥ रन्ध्रेश्वरेणापि युते तथैवं क्रूरादिषष्ट्यंशयुतेतिसत्यम् ॥ ३७ ॥ नीचस्थिते वासरनायके वा षष्ठाष्टमस्थे यदि पापदृष्टे ॥ राज्ञां प्रकोपान्मरणं पितुश्च तत्पीडया वित्तविनाशमेति ॥ ३८ ॥

चतुर्थेश नवमेश और लग्नेश त्रिकोण वा केन्द्रमें होवैं उनकी दशा अंतर्दशा समयमें पिताके साथ माताकीभी मृत्यु होवै ॥ ३४ ॥ अष्टम भावमें चद्रमा राहुयुक्त तथा बलहीन होवे तो अपस्मार ( मृगीरोग ) होवै अष्टमस्थ निर्बल चन्द्रमा शनिसहित होवै तो पिशाच और जलसे उत्पन्न पीडा होवै ॥ ३५ ॥ ऐसाही चन्द्रमा क्षीण (तनु) मंगल, राहु शनिमेंस किसीसे युक्त अष्टमस्थ होवै तो भी वही फल कहना । ऐसा चद्रमा यदि अन्य दुष्टस्थानमें होवै तो पिशाचकी पीडा अथवा मृत्यु होवै ॥ ३६ ॥ अष्टमस्थ चन्द्रमा राहु वा केतु सहित होवै तो चौथिया ज्वरसे पीडा इसको होव अष्टमेशसे युक्तभी होवै तो वही फल होगा यदि क्रूरादिषष्ट्यंशमें भी होवै तो वह फल अतिसत्य ( अवश्य ) ही होगा ॥ ३७ ॥ सूर्य नीच राशिमें होवै अथवा छठे वा आठवें भावमें पापदृष्ट होवै तो राजाओंकी पीडासे मरण एवं पिताका मरण एवं धननाशभी होवै ॥ ३८ ॥

अथ केचिदरिष्टयोगाः ॥ लग्नाच्छुभे कर्मणि भूमिपुत्रे पापेक्षिते मातुलमृत्युमाहुः ॥ मन्देन युक्ते यदि पुत्रमृत्युं चन्द्रे हि तन्मा-

तृमृतिं सपापे ॥ ३९ ॥ पितुर्मृतिर्वासरनायकेत्र न संशयः पापदृशा समेते ॥ पापद्वयेनापि युतौ विलग्ननिशाकरौ मृत्युमुपैति बालः ॥ ४० ॥ ग्रस्ते शशांके परिवेषयुक्ते पापेक्षिते वा मरणं च सद्यः ॥ त्वष्ट्रार्यतोयेषु विलग्नचन्द्रे जातः सचित्रीसुतमातुलांश्च ॥ ४१ ॥

अब थोडे अरिष्टयोग कहते हैं ॥ लग्नसे नवम वा दशममे मंगल पापदृष्ट होवै तो मामाकी मृत्यु होवै यदि शनियुक्त होवै तो उसके पुत्रकी, और चंद्र सहित होवै तो उसकी मृत्यु होवै ॥ ३९ ॥ इन्ही भावोंमे पापदृष्ट सूर्य होवै तो निस्सदेह पिताकी मृत्यु होवै, लग्नेश तथा चन्द्रमा दो पापग्रहोंसे युक्त होवै तो बाल्यावस्थाहीमें मरजावै ॥ ४० ॥ जन्म समयमे चन्द्रमापर ग्रहण अथवा ( परिवेष ) मंडल होवै तथा पापदृष्ट होवै तो बालक शीघ्र मरजावै ॥ चंद्रमा एवं लग्न चित्रा, उत्तरा फाल्गुनी, पूर्वाषाढामे होवै ऐसे समयमें चंद्रमा ग्रस्त वा परिवेषयुक्त होवै तो भाई और मामा मरें ॥ ४१ ॥

पादाक्रमेणापि निहन्ति तांस्तु शुभैस्तु दृष्टे सहिते न दोषः ॥ लाभे शुभे वा यदि मन्दभौमौ फणीन्द्रयुक्तौ पितुरस्त्यपायः ॥ ॥ ४२ ॥ पापेक्षिते भूमिसुते कलत्रे जातः स मृत्युं समुपैति रन्ध्रे ॥ सोत्थे धरासूनुयुते सपापे पापेक्षिते सोदरनाशमाहुः ॥ ४३ ॥

यद्वा उनको पादाक्रमणसे मारे यदि उस योगकर्ता ग्रहपर शुभग्रहकी दृष्टिभी होवै तो वह दोष नहीं होगा, लाभ वा नवम स्थानमें शनि मंगल राहुयुक्त होवैं तो उसके पिताका नाश होवै ॥ ४२ ॥ पापदृष्ट मंगल सप्तमस्थानमें यद्वा अष्टम स्थानमे होवै तो बाल्यावस्थामें मरण होवै तृतीयभावमें मगल पापयुक्त दृष्ट होवै तो भ्रातृनाश होवै ॥ ४३ ॥

अस्ते शशांके यदि मातृमृत्युं पापान्विते पापदृशा समेते ॥ भानौ पितुर्मृत्युमुदाहरन्ति मन्दारशुक्रैः सहिते सुतस्य ॥ ४४ ॥ तृतीयषष्ठस्थितखेचरेन्द्रैः पापग्रहैरन्त्यगतैश्च सौम्यैः ॥ शिशोर्मृतिं वा कुमुदात्मबन्धौ चतुर्थरंध्रस्थितपापखेटैः ॥ ४५ ॥

पापयुक्त दृष्ट चन्द्रमा सप्तम स्थानमे होवै तो माताकी मृत्यु होवै ऐसाही सूर्य होवै ता पिताकी मृत्यु कहतेहैं यदि सप्तममें शनि मंगळ शुक्र सहित होवै तो पुत्रकी मृत्यु होवे ॥ ४४ ॥ पापग्रह तीसरे छठे भावोंमें हों शुभग्रह बारहवें में हों अथवा चंद्रमा पापग्रहोंसहित चौथे वा आठवें होवे तो बालककी मृत्यु होवे ॥ ४५ ॥

लग्नेऽर्कचन्द्रौ व्ययगास्तु पापाः शिशोर्मृतिं शोभनदृष्टचभावे ॥
अस्ते रवौ चन्द्रयुते विलग्ने पापान्विते तत्सुतमृत्युमाहुः ॥४६॥
दिनेशचन्द्रौ व्ययगौ तदानीमन्धो भवेत्सौम्यदृशा विहीनौ ॥
युक्ते तयोरन्यतरेण रिष्फे काणो भवेत्सौम्यदृशा विहीने ॥४७॥
दिनेशचन्द्रौ व्ययगौ तदीशे लग्नस्थिते देहविनाशमाहुः ॥ सुरे-
श्वरे रंध्रगते व्यये वा पापान्विते पापदृशा समेते ॥ ४८ ॥ लग्ना-
धिपे पूर्णबले सुखेशभाग्येश्वरौ नाशगतौ विहीनौ ॥ जातस्य ज-
न्मावसरे तदानीं पितुश्च मातुर्निधनं वदन्ति ॥ ४९ ॥

लग्नमें सूर्य चन्द्रमा व्ययभावमें पापग्रह हों उन्हें शुभग्रह न देखें तो बालककी मृत्यु होवै, सप्तममें सूर्य लग्नमें चन्द्रमा पापयुक्त हों तो पुत्रमरण कहतेहैं ॥ ४६ ॥ सूर्य चन्द्रमा व्ययस्थानमें शुभदृष्टिरहित होवें तो अंधा होवै, इनमेंसे एक छठे एक व्ययस्थानमें शुभदृष्टिरहित होवें तो एक आंखसे काण होवै ॥ ४७ ॥ सूर्य चन्द्रमा व्ययभावमें और व्ययेश लग्नमें होवे तो शरीर नष्ट होवे। बृहस्पति आठवें वा बारहवें पापग्रह दृष्ट युक्त होवै ॥ ४८ ॥ लग्नेश पूर्णबली, चतुर्थेश नवमेश अष्टमभावमें बलहीन होवें तो मनुष्यके जन्मसमयहीमें माता और पिताकाभी मरण कहतेहैं ॥ ४९ ॥

दुःस्थे तृतीयाधिपतौ सचन्द्रे स्तन्यं परस्त्रीषु पिबेत्स बालः ॥
तातेशतत्कारकखेचरेन्द्रौ दुःस्थौ तयोः पुत्रसुखं न दृष्टम् ५०॥
केंद्रत्रिकोणे यदि तौ विहंगौ वदेत्तयोः पुत्रसुखं त्वभीष्टम् ॥
पितुर्निशायां मरणं वदंति भाग्येशसूर्यार्कसुताः क्षतस्थाः॥५१॥
षष्ठेश्वरेणापि युतास्तथैव चंद्रेण हीनास्तु दिवा मृतिः स्यात् ॥
सुखस्थितैः खेचरनायकैर्वा मातुर्मृतिः स्यादयने तु तस्मिन्॥५२॥

तृतीयेश चंद्रमासहित त्रिक स्थानमें होवै तो अन्यस्त्रीका दूध पीवै; अपनी माताका न पीवै, दशमेश तथा दशमभावकारक ग्रह दुष्टस्थानमें होवें तो उनको पुत्रसुख देखनेमें न आवे. ॥ ५० ॥ वही ग्रह केन्द्र त्रिकोणमें होवें तो उनको मनोनुकूल पुत्रसुख कहना। नवमेश सूर्य और शनि अष्टम स्थानमें होवें तो पिताका मरण रात्रिमें कहते हैं ॥ ५१ ॥ यदि वही षष्ठेशसे भी युक्त होवें तो दिनमें कहते हैं, परंतु षष्ठेश चंद्रमा होवै तो वह फल नहीं होगा, वही ग्रह चतुर्थ स्थानमें होवें तो उक्तप्रकार दिन वा रात्रिमें माताकी मृत्यु कहनी ॥ ५२ ॥

नो चेत्तदीशान्वितराशिकाले मातुर्मृतिः स्यादयने च तस्मिन् ॥ द्विञ्यादियोगादयनं हि तत्र व्यत्यासतो वा प्रवदन्ति सन्तः ॥ ॥ ५३ ॥ नाशे चरे वा पितृभावनाथे दूरस्थितस्तज्जनकोपि वाच्यः ॥ स्थिरोभयस्थे पितृभावनाथे समीपतस्तज्जनकः स्थितः स्यात् ॥ ५४ ॥

ऐसे न हों तो चतुर्थेश जिस राशिमें है उसके उक्त समय ( अयन दिन रात्र्यादि ) में माताकी मृत्यु कहनी, यदि दो तीन योग होवैं तो मरणसमय विपरीततासे सज्जन कहतेहैं ॥ ५२ ॥ दशमेश अष्टममें वा चरराशिमें होवै तो मरणसमयमें उसका पिता दूर रहेगा ऐसा कहना, यदि स्थिर वा द्विस्वभाव राशिमें होवै तो उस समयमें पिता समीप होगा॥५४॥

केंद्रे चरेर्के यदि वा शशांके सुतो दहेत्तत्पितरौ न तत्र ॥ द्विदेहराशौ यदि तौ च केन्द्रे तयोर्मृतिं वा दहने विकालम् ॥ ५५ ॥ बलेन युक्ते पितृभावनाथे शशांकदेहेशचतुर्थनाथाः ॥ बलेन हीना यदि तज्जनन्यां गाढां विपत्तिं समुदाहरंति ॥ ५६ ॥

सूर्य अथवा चंद्रमा चरराशि केंद्रमें होवैं तो पुत्र अपने माता पिताका दाह अपने हाथसे न करे, यदि वही केंद्रमें द्विस्वभावराशिके हों तो माता पिताके मृत्युमें दाहका कुसमय होवै ॥ ५५ ॥ दशमेश बलवान् हो चन्द्रमा लग्नेश चतुर्थेश बलहीन हों तो उसकी माताको गाढी विपत्ति कहतेहैं ॥ ५६ ॥

रन्ध्रे तु पापबाहुल्ये गुह्यरोगं विनिर्दिशेत ॥ शुभग्रहेण संदृष्टे न दोषं तत्र निर्दिशेत् ॥ ५७ ॥ रन्ध्रे शुभेक्षिते तेन संयुते चेत्सुखं भवेत् ॥ स्थूलान्नं पापसंबंधे मृद्वन्नं शुभसंयुते ॥ ५८ ॥

अष्टम भावमें बहुत पापग्रह होवैं तो गुह्यस्थानमें रोग होवे उनपर शुभग्रहोंकी दृष्टि होवै तो वह दोष न कहना ॥ ५७ ॥ अष्टम स्थानमें शुभग्रह हों शुभग्रहोंकी दृष्टि होवे तो सुखी रहे । ऐसेही पापसंबंधसे मोटा अन्न शुभग्रह संबंधसे कोमल अन्न मिले ॥ ५८ ॥

रन्ध्रेशे पापसंयुक्ते पापदृष्टे तदन्तरे ॥ पापक्षेत्रेथ वा रन्ध्रे जातः परिभवान्वितः ॥ ५९ ॥ शुभग्रहाणां संबन्धे रन्ध्रे परिभवो न हि ॥ चरे रंध्रे मृतिर्दूरे तदीशे चरराशिगे ॥ ६० ॥

अष्टमेश पापयुक्त दृष्ट होवै वा पापोंके बीच, वा पापराशिमें अथवा अष्टम स्थानमें होवै तो यह मनुष्य हारा हुआ रहे ॥ ५९ ॥ यदि अष्टम भावमें शुभग्रहोंका दृष्टियोगादि संबंध

होवे तो परिभव ( तिरस्कार ) नहीं होगा. अष्टममें चरराशि हो अष्टमेश चरराशिमें होवै तो दूरदेशमें मरण होगा ॥ ६० ॥

शनौ वा चरराशिस्थे चरांशस्थे तथा भवेत् ॥ स्थिरे रन्ध्रे तदीशे पि स्थिरराशौ तदंशके ॥ ६१ ॥ शनौ वा स्थिरराश्यंशे स्वगृहे मरणं भवेत् ॥ रन्ध्रे द्विदेहराश्यादौ मार्गे मरणमादिशेत् ॥६२॥ इत्यष्टमभावविचारः ॥

अथवा शनि चरराशिमें होवे वा चरांशकमें होवै तोभी दूरदेशमें मरण होवै । अष्टम स्थानमें स्थिरराशि हो उसका स्वामीभी स्थिरराशिमे होवै तो अपने घरमें मृत्यु होवै । ऐसे ही अष्टममें द्विस्वभाव राश्यादि होवैं तो मार्गमें मरण कहना ॥ ६१ ॥ ६२ ॥ इतने अष्टम भावके विचार कहे हैं ॥

## अथ नवमभावविचारः ।

शुभभवनाद्गुरुभाग्यं पितृपौत्रदयातपःप्राप्तिम् ॥ ऊरुस्थानं स्वांतं सहभोक्तॄन्दानयोगमपि विद्यात् ॥ १ ॥ चिन्तनीया गुरुस्वामिपितृभाग्यादिमातुलाः ॥ नवमे स्वामिसौम्याढ्ये शुभा एतेन्यथाशुभाः ॥ २ ॥

नवमभावसे गुरु, भाग्य, पिता, पौत्र, दया, तप, लाभ, ऊरुस्थान, मन, कुटुम्बादि साथ भोजन करनेवाले, दान, योगसाधन इतनोंका विचार जानना ॥ १ ॥ तथा गुरु, स्वामी ( आचार्यादि ), पिता, ऐश्वर्य आदि, मामा, इनका, विचारभी इसीसे करना। नवमभाव अपने स्वामी एवं शुभग्रहसे युक्त होवै तो उपरोक्त अच्छे होतेहैं; और प्रकार होनेमें अशुभ फल जानना ॥ २ ॥

चन्द्रे सपापे यदि धर्मराशौ भृगोः सुते वा गुरुदारगामी ॥ धर्माधिपे तादृशखेचरेण युते सपापे गुरुदारगामी ॥ ३ ॥ धर्माधिपस्थांशपतौ तथैव युक्ते तदा तादृशदारगामी ॥ धर्माधिपे नीचगते तदंशे शुक्रेण युक्ते गुरुदारगामी ॥ ४ ॥ क्षीणे निशीशे त्वथ वा तदंशे शुक्रे तथैवं गुरुदारगामी ॥ धर्माधिपे नीचगते तदंशे शुक्रेण युक्ते गुरुदारगामी ॥ ५ ॥

यदि नवम भावमें पापयुक्त चन्द्रमा अथवा पापयुक्त शुक्र होवै तो गुरु ( अपनेसे श्रेष्ठ ) की स्त्रीसे गमन करनेवाला होवै, धर्मभावेश ऐसे ग्रहसे युक्त तथा पापयुक्त होवै तो

भी वही फल होगा ॥ ३ ॥ नवमेश जिसके नवांशकमे है वहभी ऐसा युक्त होवै तो गुरु स्त्रीगामी होवै नवमेश नीच राशिमें धर्मभावस्थांशमें शुक्र होवै तोभी वही फल होगा ॥ ४ ॥ क्षीण चन्द्रमा अथवा नवमभावांश तथा शुक्र उक्त प्रकारके होवै तोभी वही फल देंगे, और धर्मेश नीचगत, धर्म भावांश शुक्रयुक्त होवै तो भी वही फल जानना ॥ ५ ॥

धर्मेश्वरे सौम्ययुते तदंशे वैशेषिकांशे त्वथ वा तदीशे ॥ क्रूरादिषष्ट्यंशविवर्जिते स्याज्जातस्तु धर्मे दृढबुद्धियुक्तः ॥ ६ ॥ गुरौ वा भृगुपुत्रे वा स्वोच्चमित्रांशके शुभे ॥ धर्माधिपे बलयुते धर्माध्यक्षो नरो भवेत् ॥ ७ ॥ गुरुशुक्रबुधांशस्थे धर्मनाथे शुभेक्षिते ॥ शुभग्रहाणां मध्यस्थे धर्मभाक्स नरो भवेत् ॥ ८ ॥

नवमेश नवमभावांश शुभयुक्त होवै नवमभाव भावेश वैशेषिकांशकमें होवैं क्रूर आदि षष्ट्यंशसे रहित होवैं तो धर्ममें दृढ बुद्धिवाला होवै ॥ ६ ॥ बृहस्पति अथवा शुक्र उच्च मित्रांशकका नवम स्थानमें होवै और नवमेश बलवान् होवै तो मनुष्य धर्माध्यक्ष होवै ॥ ७ ॥ नवमेश गुरु शुक्र बुधके अंशकमे शुभग्रहयुक्त होवै अथवा शुभग्रहोंके मध्यमें होवै तो वह मनुष्य धर्मवाला होवै ॥ ८ ॥

सौम्यान्विते धर्मगृहे तस्मिन् पापांशसंयुते ॥ क्रूरषष्ट्यंशके वापि दंभाद्धर्मपरिग्रहः ॥ ९ ॥ नाथकारकभावानामंशे शुभसमन्विते ॥ शुभांशे शुभसंदृष्टे शुचितो धर्मसंयुतः ॥ १० ॥

नवमभाव शुभयुक्त हो परंतु उसमें पापांशक अथवा क्रूरषष्ट्यंशक होवै तो दंभ ( घमंड ) से धर्म करे ॥ ९ ॥ नवम भावेश नवम भावकारकेशके अंशकमें शुभयुक्त होवै अथवा वे शुभांशकी शुभदृष्ट होवैं तो पवित्रतासे धर्मसहित रहे ॥ १० ॥

धर्मे पापे पापभाक्स्यात्तदीशे पापसंयुते ॥ क्रूरषष्ट्यंशके वापि पापमध्यगतेऽथ वा ॥ ११ ॥ राहुमंदयुते धर्मे क्रूरांशे गुलिकेक्षिते ॥ तदीशे क्रूरराश्यंशे त्वतिक्रूरादिकृद्भवेत् ॥ १२ ॥

धर्मस्थानमें पापग्रह होवै तो पाप भोगनेवाला होवै, धर्मेश पापयुक्त अथवा क्रूरषष्ट्यंशमें वा पापग्रहोंके मध्यमें होवै ॥ ११ ॥ यद्वा धर्मस्थान राहु शनैश्चरसे युक्त होवै क्रूर गुलिकसे दृष्ट होवै नवमेश क्रूरराशि क्रूरांशकमें होवै तो अतिक्रूरआदि काम करनेवाला होवै ॥ १२ ॥

पितृस्थानेश्वरे सौम्ये कारके शुभसंयुते ॥ भावे वा शुभसंयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ १३ ॥ पारावतादिभागस्थे नाथे वा

कारकेपिवा ॥ स्वोच्चमित्रांशके वापि पितृसौख्यं विनिर्दिशेत् ॥ ॥१४॥ सौम्यांतरस्थे तन्नाथे गुरुशुक्रयुतेक्षिते ॥ तेषामेकेन संयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ १५ ॥ गोपुराद्यंशसंयुक्ते कारके नाथवीक्षिते ॥ पापैरवीक्षिते युक्ते पितृसौख्यं विनिर्दिशेत् ॥ १६ ॥

पितृस्थानका स्वामी शुभग्रह होवे पितृकारक ग्रह शुभयुक्त होवै अथवा पितृभाव शुभग्रहयुक्त होवै तो पिताका सौख्य कहना ॥ १३ ॥ भावेश वा भावकारक पारावतादि अंशकमें होवै अथवा उच्चांशक मित्रांशकमें होवै तो पितृसौख्य कहना ॥ १४ ॥ पितृस्थानेश शुभग्रहोंके मध्यमें गुरुशुक्रसे युक्त वा दृष्ट होवै अथवा गुरुशुक्रमेंसे एकसेभी युक्त होवै तो पितृसौख्य कहना ॥ १५ ॥ पितृकारक गोपुरादि अंशमें हो पितृभावेशसे दृष्ट पापग्रहोंसे अदृष्ट होवै तो वही फल कहना ॥ १६ ॥

पापदृष्टे सपापे वा कारके भावनायके ॥ पापांतरगते वापि पितृदुःखं विनिर्दिशेत् ॥ १७ ॥ क्रूरनीचांशकस्थे वा भावनाथे च कारके ॥ मंदमांद्यगुसंयुक्ते पितृदुःखं विनिर्दिशेत् ॥ १८ ॥ सौम्ये तदीश्वरे वापि नीचशत्रुसमन्विते ॥ क्रूरषष्ट्यंशके वापि पितृदुःखं विनिर्दिशेत् ॥ १९ ॥ पितृस्थानेश्वरांशेशसंयुक्तनवभागपः ॥ क्रूरनीचारिभागस्थपितृदुःखं विनिर्दिशेत् ॥ २० ॥

पितृभावकारक वा भाव पापयुक्त वा दृष्ट हो अथवा पापोंके मध्यमें होवै तो पिताको दुःख कहना ॥ १७ ॥ भावेश वा भावकारक क्रूरांशक नीचांशकमें होवै शनि केतु राहुसे युक्त होवै तो पिताको दुःख कहना ॥ १८ ॥ पितृभावेश वा तत्रस्थ शुभग्रह नीचका हो अथवा शत्रुराश्यंशयुक्त होवै अथवा क्रूरषष्ट्यंशकमें होवै तो वही फल कहना ॥ १९ ॥ पितृभावेश जिसके अंशकमें हो वह जिसके नवांशकमें है क्रूर नीच शत्रुके अंशकमें होवै तोभी वही फल कहना ॥ २० ॥

लग्नेशात्पितृभावेशे संपूर्णबलसंयुते ॥ कारके वा शुभैर्दृष्टे जातः पितृवशानुगः ॥ २१ ॥ पितुर्जन्माष्टमे जातस्तदीशे लग्नगेपि वा ॥ तेनैव पितृकार्याणि कर्मशेषं समापयेत् ॥ २२ ॥

पितृभावेश वा पितृभावकारक लग्नेशकी अपेक्षा पूर्णबली तथा शुभदृष्ट होवैं तो मनुष्य पिताके वशमें उसका आज्ञाकारी होवै ॥ २१ ॥ पिताके जन्मलग्नसे अष्टम लग्नमें जन्म होवै. अथवा उस लग्नका स्वामी इसके लग्नमें होवै तो उसी ग्रहसे शेषकर्म ( [illegible] ) समाप्त करे इसका खुलासे अष्टकवर्ग गणितमें है ॥ २२ ॥

पितृकर्मगृहे जातः पितृतुल्यगुणान्वितः ॥ पितृजन्मतदीयर्क्षे जातः पितृधनाश्रितः ॥२३॥ पितु षष्ठाष्टमे जातः पित्रोः शत्रुर्भवेन्नरः ॥पितुर्धर्मायवित्तेषु जातः पितृवशो भवेत् ॥२४॥ पित्रष्टमेशनक्षत्रत्रितये यस्तु जायते ॥ स करोति पितुर्दुःखं पुत्रपौत्रसमन्वितः ॥ २५ ॥ पितुर्जन्मांत्यभेशर्क्षत्रितये यस्तु जायते ॥ स करोति पितुर्दुःखं दूरदेशगतो भवेत ॥ २६ ॥

पिताकी राशिसे दशम राशिमें जन्म होवै तो पिताके गुणोंके तुल्य गुणवाला होवै यदि पिताके राशिमें जन्म होवै तो मनुष्य पिताके धनका आश्रयी होवै ॥ २३ ॥ पिताके राशिसे ६ वा ८ राशिमें होवै तो मनुष्य पिताका शत्रु होवै पिताके ९ । ११ । २ मेंसे किसी राशिमें जन्म होवै तो पिताके वशमें रहै ॥ २४ ॥ पिताके अष्टम राशिमें वा अष्टमेश जिस नक्षत्रमें है उससे तीन नक्षत्रोंमें जन्म होवै तो वह मनुष्य पुत्रपौत्रसहित पिताकी आज्ञा ( शिक्षा ) पर चले ॥ २५ ॥ पिताके जन्मराशिसे द्वादशेशसे तीनराशियोंमेंसे किसीमें जन्म होवै तो पिताको दुःख करे तथा दूरदेश चलाजावै ॥ २६ ॥

भाग्याधिपे विलग्नेशे दुश्चिक्ये धर्मगेपि वा ॥ बलवान् स्वोच्चभे वापि येषां ते श्रेष्ठमानवाः ॥ २७॥ त्रिकोणकेन्द्रे यदि भाग्यनाथे सौम्येक्षिते सौम्ययुते बलाढ्ये॥ पारावतांशादिगते शुभांशे जातो धनाढ्ये बहुभाग्ययुक्तः ॥ २८ ॥ धनाधिपे लाभगते तदीशे भाग्यस्थिते तद्भवनाधिपेथे॥कर्माधिपेनापि युतेथ दृष्टे जातो महाभाग्ययुतो नरः स्यात् ॥ २९ ॥

नवमेश तथा लग्नेश तीसरे वा नवममें होवैं बलवान् होवैं अथवा अपने उच्चमें होवैं ऐसे योग जिन मनुष्योंके हों वे श्रेष्ठ मनुष्य होतेहैं ॥ २७ ॥ नवमेश केन्द्र त्रिकोणमें शुभग्रहदृष्ट वा युक्त होवै बलवान् होवै पारावतादि शुभांशकमें हो तो मनुष्य धनवान् बडा भाग्यशाली होताहै ॥ २८ ॥ द्वितीयेश लाभस्थानमें लाभेश नवममें नवमेश द्वितीयमें होवै दशमेशसे दृष्ट वा युक्त होवै तो मनुष्य बडा भाग्यशाली होवै ॥ २९ ॥

तृतीयराशेरधिपेन युक्ते भाग्याधिपे सौम्यदृशा समेते ॥ शुभान्विते शोभनखेचरांशे भ्रातुर्धनाद्भाग्यमुपैति जातः ॥ ३० ॥ पुत्रे

श्वरे वा यदि भाग्यराशौ भाग्याधिपेनात्र युतेपि दृष्टे ॥ तत्कारके वा यदि पुत्रभावे जातः सुताद्भाग्यमुपैति वित्तम् ॥ ३१ ॥

नवमेश तृतीयभावेश युक्त तथा शुभग्रहोंसे युक्त वा दृष्ट और शुभग्रहके अंशकमें होवै तो भाईके धनसे मनुष्य ऐश्वर्य पावै ॥ ३० ॥ यदि पंचमेश भाग्यस्थानमें भाग्येशसे युक्त वा दृष्ट अथवा नवमभावकारकग्रह पंचममें होवै तो पुत्रसे ऐश्वर्य एवं धन पावै ॥ ३१ ॥

ज्ञातिस्थानाधिपे भाग्ये भाग्येशे ज्ञातिसंगते ॥ ज्ञातिकारकसंयुक्ते ज्ञातिभाग्यमुपैति सः ॥ ३२ ॥ कलत्रकारकादेवं तत्स्थानेशाद्वदेत्तथा ॥ भाग्याधिपस्य शत्रुश्च शत्रुराशिपतिस्तथा ॥ ३३ ॥ तदीशे भाग्यसंबंधे शत्रुभाग्यमुपैति सः ॥ षष्ठाष्टमांत्यनाथेन युक्ते नाथेत्र तत्फलम् ॥ ३४ ॥

चतुर्थेश नवमस्थानमें नवमेश चतुर्थमें हो चतुर्थभावकारकसे युक्त होवे तो ज्ञाति ( बिरादर ) का ऐश्वर्य पावै ॥ ३२ ॥ ऐसेही कलत्रभाव कलत्रकारकसे भी स्त्रीसे ऐश्वर्य कहना नवमेशका शत्रुग्रह तथा शत्रुराशिका स्वामी भाग्य वा भाग्येशसे वैसाही संबंध करै तो शत्रुका ऐश्वर्य पावै यदि भाग्येश ६ । ८ । १२ भावेशसे संबंधी हो तोभी वही फल होगा ॥ ३३ ॥ ३४ ॥

भाग्याधिपे विनाशस्थे शत्रुनीचनिरीक्षिते ॥ क्रूरांशे नीचराश्यादौ भाग्यहीनो भवेन्नरः ॥ ३५ ॥ बहुपापसमायोगे भाग्ये हीने तदीश्वरे ॥ लग्नेशे बलहीने वा भाग्यहीनो भवेन्नरः ॥ ३६ ॥

भाग्येश बारहवें भावमें शत्रुदृष्ट वा नीचमें यद्वा नीचगत ग्रहसे दृष्ट होवै क्रूरांशमें अथवा नीचराशि आदिमें होवै तो मनुष्य भाग्यहीन होवै ॥ ३५ ॥ नवममें बहुत पाप हों नवमेश हीनबल होवै अथवा लग्नेश बलरहित होवै तो मनुष्य भाग्यहीन होवै ॥ ३६ ॥

गुरुशुक्रेक्षिते युक्ते भाग्ये तन्नायकेपि वा ॥ लग्नेशार्थपतौ धीरे भाग्यप्राप्तिः पुनर्भवेत् ॥ ३७ ॥ क्रूरराश्यंशके भाग्यनाथे शुक्रेज्यवीक्षिते ॥ भाग्यलग्नेशसंदृष्टे भाग्यनाशं करोति सः ॥ ३८ ॥ लग्नेशे भाग्यराशिस्थे भाग्येशे लग्नमाश्रिते ॥ लाभे भाग्येशसंयुक्ते पुनर्भाग्यं लभेत्खलु ॥ लाभभाग्येशसंयुक्तभाग्यपेर्थः पुनर्भवेत् ॥ ३९ ॥

भाग्यभाव तथा भाग्येश बृहस्पति शुक्रसे दृष्ट वा युक्त होवै, लग्नेश तथा द्वितीयेश बलवान् होवै तो फिरभी ऐश्वर्यकी प्राप्ति होवै ॥ ३७ ॥ नवमेश क्रूरग्रहके राशि अंशकमें होवै उसे शुक्र बृहस्पति देखे भाग्येश लग्नेशभी देखें तो वह ऐश्वर्यका नाश करताहै ॥ ३८ ॥ लग्नेश नवममें नवमेश लग्नमें हो अथवा नवमेश लाभस्थानमें होवै तो फेरभी नष्ट ऐश्वर्यका लाभ होवै, लाभेश भाग्येश युक्त हो अथवा परस्परराशिगत हो तोभी फिर धनादि होंगे ॥ ३९ ॥

कर्मेशे भाग्यराशिस्थे भाग्येशे बलसंयुते ॥ गुरुशुक्रयुते दृष्टे जपध्यानसमाधिमान् ॥ ४० ॥ कर्मेशयुक्तराश्यंशराशीशे बलसंयुते ॥ तदीशे भाग्यसंबंधे जपध्यानसमाधिमान् ॥ ४१ ॥ देवलोकांशकस्थे वा कर्मेशे भाग्यपेथ वा ॥ पारावतांशके सौम्ये दृष्टे सुब्रह्मनिष्ठता ॥ ४२ ॥

दशमेश नवम हो नवमेश बलवान् हो बृहस्पति शुक्रसे युक्त वा दृष्ट होवै तो जप ध्यान समाधिवाला होवै ॥ ४० ॥ दशमेश जिसकी राशिमें है वह बलवान् होवै जिस राशिमें वह बैठा है उसका स्वामी नवमेशसे किसी प्रकारका संबंध रखता हो तोभी वही फल होगा॥४१॥ दशमेश वा नवमेश देवलोकांशकमें हो अथवा पारावतांशकमे शुभदृष्ट होवै तो ब्रह्मनिष्ठ होवै ॥ ४२ ॥

दानस्थानाधिपे स्वोच्चे शुभग्रहनिरीक्षिते ॥ तत्स्थाने शुभसंयुक्ते दानकृत्स नरो भवेत् ॥ ४३ ॥ पारावतादिभागस्थे दानेशे गुरुवीक्षिते ॥ लग्नेशे भृगुसंदृष्टे महादानकरो भवेत्॥४४॥दानाधिपेन संदृष्टे लग्ने तन्नायकेपि वा ॥ तस्मिन्केन्द्रत्रिकोणस्थे महादानकरो भवेत् ॥४५॥ सिंहासनांशके दाननाथे लग्नेशवीक्षिते ॥ कर्मेशेनापि संदृष्टे महादानकरो भवेत् ॥ ४६ ॥

नवमेश अपने उच्चमें शुभग्रहदृष्ट होवै नवमभावमें शुभ ग्रह होवै तो वह मनुष्य दान करनेवाला होवै ॥ ४३ ॥ नवमेश पारावतादि शुभांशकमें गुरुसे दृष्ट होवे, लग्नेशपर शुक्रकी दृष्टि होवै तो मनुष्य महादान ( अग्निदान तुलादानादि ) करनेवाला होवै ॥ ४४ ॥ लग्नेश वा लग्नमें नवमेशकी दृष्टि होवै वह नवमेशभी केन्द्र त्रिकोणमें होवै तो भी वही फल होवै ॥ ४५ ॥ नवमेश सिंहासनांशकमें होवै उसे लग्नेश देखे और कर्मेशभी देखे तोभी वही फल होगा ॥ ४६ ॥

भाग्ययोगे तु संप्राप्ते दानयोगे तथा भवेत् ॥ राजयोगेथ वा प्राप्ते नेतरेषां तथा भवेत् ॥ ४७ ॥ इतरेषां तु संप्राप्ते दानयोगे कथं भवेत् ॥ भाग्ययोगे नरो जातो दानस्य तु सहायकृत् ॥ ४८ ॥ जातः पुरोहितो वाथ ब्रह्मवंशसमुद्भवः ॥ दानाध्यक्षोऽथ जातः स्याद्वर्णभेदविकल्पनात् ॥ ४९ ॥

भाग्ययोगहोनेमें तथा दानयोग अथवा राजयोग होनेमें उक्त फल होताहै. अन्ययोगोंमें नहीं ॥ ४७ ॥ दानयोग होनेमें भी उक्तयोग न हो राजभंगादि दुष्टयोग हो तो दानी होना संभव नहीं होता दानयोगमें भाग्ययोगभी होवै तो वह दानकर्ममें सहायता करता है भाग्ययोगकी संपन्नतासे दान होताहै अथवा दूसरेके दानमें सहायता और उसका प्रतिपालनआदि करताहै ॥ ४८ ॥ उक्तदानादियोगोंसे ब्राह्मणवंशोत्पन्न पुरोहित अथवा दानाध्यक्ष होताहै क्षत्रिय दानी, अथवा दानकर्मसहायक होताहै ऐसेही स्ववर्णानुरूप फल मनुष्यको मिलताहै ॥ ४९ ॥

चतुर्थे दानभावेशे कर्मेशे केन्द्रमाश्रिते ॥ व्ययेशे गुरुसंदृष्टे महादानकरो भवेत् ॥ ५० ॥ भाग्येशेनापि संदृष्टे स्वोच्चस्थे सोमनंदने ॥ लाभेशे केन्द्रभावस्थे महादानकरो भवेत् ॥ ५१ ॥

नवमेश चतुर्थदशमेश केन्द्रमें होवै व्ययेशपर बृहस्पतिकी दृष्टि होवै तो महादान-देनेवाला होवै ॥ ५० ॥ बुध अपने उच्चका होवै नवमेश उस देखे और लाभेश केन्द्रमें होवै तो महादान करनेवाला होवै ॥ ५१ ॥

लग्नेशे लाभराशिस्थे कर्मेशे बलसंयुते ॥ लग्नेशेनापि संदृष्टे दानग्रहणमिष्यते ॥ ५२ ॥ सुतेशे भाग्यराशिस्थे कर्मभाग्यपसंयुते ॥ लग्नेशेनापि संदृष्टे दानप्राप्तिर्न संशयः ॥ ५३ ॥ भाग्येशे कर्मनाथेन दृष्टे केन्द्रत्रिकोणगे ॥ परमोच्चांशके वापि दानप्राप्तिर्न संशयः ॥ ५४ ॥

लग्नेश लाभस्थानमें हो दशमेश बलवान् होवै उसे लग्नेशभी देखै तो दान लेनेवाला होवै ॥ ॥ ५२ ॥ पंचमेश नवमस्थानमें नवमेश तथा दशमेशसे युक्त होवै उसे लग्नेशभी देखै तो उसको दानकी प्राप्ति होवै इसमें संदेह नहीं ॥ ५३ ॥ नवमेश दशमेशसे दृष्ट होकर केन्द्र त्रिकोणमें होवै अथवा परम उच्चांशमें होवै तो निस्सन्देह दानकी प्राप्ति होवै ॥ ५४ ॥

गुरुस्थानेशसंयुक्तनवांशाधिपतौ यदा ॥ गुरुशुक्रेक्षिते वापि गुरुभक्तियुतो भवेत् ॥ ५५ ॥ गुरुस्थाने सौम्ययुते गुरुसंबंध संयुते ॥ तदीशे मृदुभावस्थे गुरुभक्तियुतो भवेत् ॥ ५६ ॥ अध्यायः सप्तमः प्रोक्तश्चायुर्धर्माधिवाचकः ॥ नानार्थसारसंयुक्तो व्यङ्कटेश्वरशर्मणा ॥ ५७ ॥

इति श्रीसर्वार्थचिंतामणौ अष्टमनवमभावफलविचारो नाम सप्तमोऽध्यायः ॥ ७ ॥

बृहस्पति जिसकी राशिमें है वह जिसके नवांशमें हो वह गुरु शुक्रसे दृष्ट होवै तो गुरुभक्तिवाला होवै ॥ ५५ ॥ नवमस्थान शुभयुक्त हो बृहस्पति उसके साथ संबंध करता हो उसकी अधिष्ठित राशिका स्वामी सौम्यभावमें होवै तो मनुष्य गुरुभक्तिवाला होवै ॥ ५६ ॥ यह सातवां अध्याय आयु तथा धर्मविचारवाचक नानाप्रकारके सार अर्थोंसे युक्त वेङ्कटेश्वर शर्माने कहा ॥ ५७ ॥

इति श्रीसर्वार्थचिंतामणौ माहीधरभाषाटीकायामष्टमनवमभावफलविचाराध्यायः सप्तमः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अथ दशमादिभावविचाराऽध्यायः ।

दशमात्प्रवृत्तिमाज्ञां कीर्तिं वृष्टिं प्रवासपूर्तादीन् ॥
मानं कर्माजीवं जानुस्थानं च निर्दिशेद्दासान् ॥ १ ॥

दशमभावसे कर्मकी प्रवृत्ति ( किस काममें रुचि रहेगी ) हकूमत, कीर्ति, वर्षा, प्रवास, पूर्त ( वापी कूपआदि ) आदिसे राज्यस्थान ऐश्वर्यादि, तथा मान, किस कामसे आजीवन होगा, ( पितृस्थानादि ) और जानुस्थानका विचार, दासआदियोंका विचार कहना ॥ १ ॥

कर्माधिपे हीनबले सपापे कर्मादिवैकल्यमुशंति तज्ज्ञाः ॥ कर्मेशवागीशशशांकपुत्रा वीर्यान्विता यज्ञकरा भवन्ति ॥ २ ॥ शुभग्रहैर्दृष्टिसमन्वितास्ते वीर्यान्विता यज्ञविशेषमाहुः ॥ दुःस्थाः शशांकात्मजजीवशुक्राः पापेक्षिताः कर्मविनाशमाहुः ॥ ३ ॥

दशमेश हीनबल पापयुक्त होवै तो ज्योतिषज्ञ कर्मआदिकी विकलता कहतेहैं दशमेश बृहस्पति बुध बलवान् होवै तो मनुष्य यज्ञ करनेवाले होतेहैं ॥ २ ॥ वही तीनों शुभग्रहोंसे दृष्ट तथा बलवान्भी होवैं तो यज्ञविशेष कहतेहैं बुध गुरु दुष्टस्थानोंमें हों पापग्रह उन्हें देखें तो कर्मका नाश कहतेहैं ॥ ३ ॥

नाशस्थितास्तत्र तदंशनाथास्तद्युक्तराशेरधिपाश्च नाशम् ॥ राहौ च माने यदि वा दिनेशे भागीरथीस्नानमुशंति तज्ज्ञाः ॥ ४ ॥ माने च मीने यदि वा ससौम्ये भौमान्विते वा भविता च मुक्तिः ॥ जलर्क्षगे पूर्णशशांकजीवे मानस्थिते गांगजलादिपूतः ॥ ५ ॥

वही बुध गुरु शुक्र नाशस्थानमें हो अथवा उनके अंशनाथ तथा राशिनाथभी नाशस्थानमें हों तो भी वही फल होगा यदि राहु अथवा सूर्य दशम स्थानमें होवैं तो ज्योतिषज्ञ भागीरथीका स्नान मिलेगा कहतेहैं ॥ ४ ॥ दशममें मीनराशि शुभग्रहयुक्त अथवा भौमयुक्त होवै तो मुक्ति होगी दशमस्थानमें जलचर राशिके पूर्णचन्द्रमा बृहस्पति होवैं तो गंगाआदिके जलसे पवित्र होवै ॥ ५ ॥

माने गुरौ शुक्रयुते च केन्द्रे स्वोच्चस्थिते तादृशतोयपूतः ॥ माने धने शुक्रयुते सजीवे केन्द्रोच्चगे तादृशतोयपूतः ॥ ६ ॥ बुधे व्यये वा यदि वा तदीशे स्वोच्चान्विते तादृशपुण्यभाक्स्यात् ॥ चन्द्रे तृतीये जलराशियुक्ते सौम्यान्विते तादृशपुण्यभाक्स्यात् ॥ ७ ॥

दशम स्थानमें बृहस्पति शुक्रयुक्त होवै अथवा अपनी उच्चराशिका किसी केन्द्रमें होवै तो गंगाजलसे पवित्र होवै दशम वा द्वितीय स्थानमें शुक्रसहित बृहस्पति हो अथवा केन्द्रमें उच्चराशिका होवै तो वैसेही गंगाजलसे पवित्र होवै ॥ ६ ॥ बुध बारहवें होवै अथवा व्ययेश अपने उच्चमे होवै तो वैसाही पुण्यवान् होवै चन्द्रमा जलराशिका तीसरे भावमे शुभयुक्त होवै तोभी वैसेही पुण्यवाला होवै ॥ ७ ॥

शुभेश्वरे केन्द्रयुते जलर्क्षे सौम्येक्षिते तादृशतोयपूतः ॥ बुधे सजीवे यदि वा सभौमे प्राकारकृन्मण्डपगोपुरादीन् ॥ ८ ॥ मानस्थिते तद्गृहनाथयुक्ते करोति जीर्णोद्धरणादि तत्र ॥ ९ ॥ करोति कूपादितटाकभूमिं कर्मेश्वरे गोपुरभागयुक्ते ॥ मृद्वंशके वा शुभदृष्टियुक्ते भाग्येश्वरेणापि निरीक्षिते वा ॥ १० ॥

दशमेश जलराशिका केन्द्रमें हो शुभग्रह उसे देखे तो गंगाआदिके जलसे पवित्र रहे बुध बृहस्पति अथवा मंगलसे युक्त होवै तो प्राकार मण्डप अट्टालिका आदि बनानेवाला होवै ॥ ८ ॥ बुध दशमेश सहित दशम स्थानमें होवै तो जीर्णोद्धार आदि करताहै ॥ ९ ॥ दशमेश गोपुरांशकमें होवै अथवा मृदंशकमें होवै शुभग्रह तथा भाग्येशसेभी दृष्ट होवै तो कुआं तालाब आदि भूमि बनावै ॥ १० ॥

चन्द्रात्मजे कर्मगते तदीशे भाग्यस्थिते पापविवर्जितेस्मिन् ॥ सौम्येक्षिते शोभनभावयुक्ते यज्ञस्य कर्त्ता स भवेत्तदानीम् ॥ ११ ॥ कर्माधिपेस्मिन्यदि सोमपुत्रे स्वोच्चस्थिते वा यदि धर्मराशौ ॥ विवर्जितः स्याच्छिखिराहुपापैर्यज्ञस्य कर्त्ता स भवेत्तदानीम् ॥ १२ ॥

बुध दशम स्थानमें दशमेश नवममें पापरहित होवै शुभग्रहकी राशियोंमें शुभग्रह दृष्ट होवै तो यज्ञ करनेवाला होवै ॥ ११ ॥ यदि बुध दशमेश होकर अपने उच्चमें होवै अथवा नवमभावमें होवै केतु राहु और पापग्रहोंसे रहित होवै तो यज्ञका करनेवाला होवै ॥ १२ ॥

कर्माधिपे स्वोच्चगते सपापे नीचांशगे नाशगतेपि तस्मिन्॥विघ्नो भवत्येव मखस्य तस्य क्रूरादिपष्ट्यंशगतेपि चैवम् ॥ १३ ॥ तुंगस्थिते सोमसुते तदीशे स्वोच्चान्विते सोमसुतेन दृष्टे ॥ शुभेक्षिते वा सबुधे स्वराशौ यज्ञस्य कर्ता स भवेत्तदानीम् ॥ १४ ॥

दशमेश अपने उच्चराशिमे हो परंतु पापयुक्त नीचांशकमे और बारहवें होवै तो उसके यज्ञका विघ्न अवश्य होताहै यदि दशमेश क्रूरआदि षष्ट्यंशमे होवे तोभी वही फल होगा॥ १३॥ दशमेश अपने उच्चराशिमें हो उसे उच्चराशिस्थ बुध देखे अथवा शुभग्रह दृष्ट तथा बुधयुक्त होवै यद्वा उच्चमें न हो अपनी राशिमें होवै तो वह मनुष्य यज्ञकरनेवाला होवै ॥ १४ ॥

आज्ञास्थानाधिपे सौम्ये शुभदृष्टियुतेपि वा ॥ शोभनांशगते वापि जातस्त्वाज्ञाधिपो भवेत् ॥ १५ ॥ आज्ञास्थानगते सूर्ये भूमिपुत्रेण वा युते ॥ केन्द्रान्विते तदीशेपि क्रूरामाज्ञां करोति सः ॥ १६ ॥ आज्ञाधिपे मन्दयुते रन्ध्रनाथेन संयुते ॥ क्रूरांशे केन्द्रराशौ वा क्रूरामाज्ञां करोति सः ॥ १७ ॥ मानाधिपे केन्द्रयुते शुभयुतेक्षितेपि वा ॥ शरपष्ट्यंशसंयुक्ते सौम्यामाज्ञां करोति सः ॥ १८ ॥

दशमेश शुभग्रह शुभग्रहसे दृष्ट युक्त होवै अथवा शुभांशकमें होवै तो दूसरेको आज्ञा देनेवाला ( हाकिम ) होवै ॥ १५ ॥ दशम भावमें सूर्य वा मंगल होवै दशमेश केन्द्रमें हो तो वह हाकिम होनेपर क्रूर आज्ञा देनेवाला होवै ॥ १६ ॥ दशमेश शनियुक्त तथा अष्टमेशसे युक्त होवै क्रूरांशकमें अथवा केंद्रमें होवै तो क्रूर आज्ञा देताहै ॥ १७ ॥ दशमेश केंद्रमें शुभग्रहोंसे युक्त दृष्ट होवै पांचवें षष्ट्यंशमें होवै तो वह हाकिम सौम्य आज्ञा देताहै ॥ १८ ॥

राहुमांदियुते माने रंध्रे राहौ ध्वजेपि वा ॥ नीचस्थे धर्मभावेशे क्रूरामाज्ञां करोति सः ॥ १९ ॥ शशांके कर्किसंयुक्ते गुरुशुक्र निरीक्षिते ॥ पारावतादिभागस्थे सत्कीर्तिसहितो भवेत् ॥२०॥

राहु वा केतु दशममें हो अथवा अष्टममें हो और धर्मेश नीचराशिमें होवै तो वह क्रूर आज्ञा देता है ॥ १९ ॥ चंद्रमा कर्कका बृहस्पति शुक्रसे दृष्ट होवै पारावतादि शुभांशकमें होवै तो वह मनुष्य सत्कीर्तिवाला होवै ॥ २० ॥

तदीशे शुभसंयुक्ते शुभमध्यगतेपि वा॥शुभग्रहाणामंशे वा सत्कीर्तिसहितो भवेत् ॥ २१ ॥ कांतिस्थानाधिपे सौम्ये स्वोच्चमित्रस्ववर्गगे ॥ सौम्यषष्ट्यंशके वापि सत्कीर्तिसहितो भवेत् ॥२२॥ तदीशे देवलोकस्थे सिंहांशे शुभनायके ॥ बलपूर्णे विलग्नेशे सत्कीर्तिसहितो भवेत् ॥ २३ ॥ पापग्रहाणां संबंधे माननाथे बलक्षये ॥ क्रूरषष्ट्यंशसंयुक्ते सत्कीर्तिसहितो भवेत् ॥ २४ ॥

चंद्राशीश शुभयुक्त अथवा शुभग्रहोंके मध्यमें हो अथवा शुभग्रहोंके अंशकमें होवै तो सत्कीर्तियुक्त होवे ॥ २१ ॥ दशमेश शुभग्रह अपने उच्च वा मित्रराशि वा अपने अंशमें होवै अथवा शुभषष्ट्यंशमें होवै तो सत्कीर्तिवाला होवे ॥ २२ ॥ दशमेश देवलोकांशकमें होवै और नवमेश सिंहासनांशकमें पुस्तकांतरमें "शुभांशकस्थे" ऐसा पाठहै अर्थात् शुभग्रहके नवमांशमें होवे, लग्नेश पूर्णबली होवै तो सत्कीर्तिवाला होवै ॥ २३ ॥ दशमेश निर्बल तथा पापग्रहोंसे संबंधी होवै और क्रूरषष्ट्यंशमें होवै तो यही फल होगा ॥ २४ ॥

अपकीर्तियुतो जातः कर्मस्थे च रवौ शनौ॥पापांशके पापदृष्टे पापमध्यगतेपि तत् ॥ २५ ॥ शुभग्रहाणां संबंधे मानतन्नायकेपि वा ॥ स्वोच्चे वा स्वगृहे वापि जातो मानी दृढव्रतः ॥२६॥ इंगितज्ञोपि मानी स्यान्माने जीवेथ वा शुभे ॥ तदीशे शुभसंबंधे शुभमध्यगतेपि वा ॥ २७ ॥

दशमस्थानमें सूर्य वा शनि पापदृष्ट वा पापमध्य होवै तो भी अपकीर्तिवाला होवै॥२५॥ दशमस्थानसे अथवा दशमेशसे शुभग्रहोंका संबंध होवै अथवा स्वोच्चराशि वा स्वराशिमें होवै तो मानवाला और दृढव्रतवाला होवै ॥ २६ ॥ दशमस्थानमे बृहस्पति अथवा कोई शुभग्रह होवै दशमेशका संबंध शुभग्रहोंसे होवै अथवा शुभग्रहोंके मध्यमे होवै तो आकारहीसे दूसरेके मनका भाव जाननेवाला होवै ॥ २७ ॥

पापे माने पापदृष्टे तदीशे नीचराशिगे ॥ पापराश्यंशके वापि मानहीनो भवेन्नरः ॥ २८ ॥ मानाधिपे चरांशस्थे संचारसहितो भवेत् ॥ स्थिरांशे स्थैर्यमुद्दिष्टं मृगयात्रा द्विदेहगे ॥ २९ ॥ षष्ठेशे कर्मराशिस्थे कर्मेशे मंदसंयुते ॥ केंद्रत्रिकोणगे वापि दासीदासान्विनिर्दिशेत् ॥ ३० ॥

दशमस्थानमे पापग्रह पापग्रहसे दृष्ट हो दशमेश नीचराशिमें हो अथवा पापग्रहकी राशि वा अंशकमें होवै तो मनुष्य मानहीन रहे ॥ २८ ॥ दशमेश चरराश्यंशकमें होवै तो घूमने फिरनेवाला होवै स्थिरांशकमें होवै तो स्थिर रहे और द्विस्वभावांशकमें होवे तो शिकार खेलना आदि सैलानी होवै ॥ २९ ॥ षष्ठेश दशममे दशमेश शनियुक्त होवै अथवा केन्द्र त्रिकोणमें होवै तो दास दासी बहुत होवैं ॥ ३० ॥

कर्माधिपस्थांशपतौ शनिसंबंधसंयुते ॥ षष्ठाधिपस्य संबंधे बहुदासान्विनिर्दिशेत् ॥ ३१ ॥ शुभग्रहेण संदृष्टे कर्मराशौ तदीश्वरे ॥ भानुपुत्रेण वा युक्ते बहुदासान्विनिर्दिशेत् ॥ ३२ ॥ कर्मनाथेन वा भुक्तिप्रश्ने पूर्तिं विनिर्दिशेत् ॥ तत्र पापसमायोगे जानुदौर्बल्यमादिशेत् ॥ ३३ ॥ इति दशमभावविचारः ॥

दशमेश जिसके नवांशकमें है वह शनिसे संबंधी होवे षष्ठेशकाभी संबध हो तो बहुतदासका होना कहना ॥ ३१ ॥ दशमस्थानमें शुभग्रहकी दृष्टि होवै व दशमेश शनियुक्त होवै तोभी वही फल कहना ॥ ३२ ॥ भोजनप्रश्नमें दशमेशसे भोजनकी पूर्ति आदि बलाबल देखके कहनी दशममें पापग्रह होवैं तो जंघा कृश होवै ॥ ३३ ॥ इति दशमभावविचारः ॥

अथ प्रव्रज्यायोगाः ।

ग्रहैश्चतुर्भिः सहितैस्तदीशे त्रिकोणगे केन्द्रगतैस्तु मुक्तः ॥ चतुर्ग्रहैः केंद्रगतैः प्रव्रज्यामाप्नोति जातः कथितो मुनीन्द्रैः ॥ १ ॥

न वीक्षितश्चेदितरग्रहैर्द्रैर्लग्नाधिपः पश्यति भानुपुत्रम् ॥ लग्नाधिपं वा यदि भानुपुत्रः संन्यासयोगो हि बलेन हीनः ॥ २ ॥ शनेर्दृकाणे कुमुदात्मबन्धौ मंदेक्षिते तादृशयोगमाहुः ॥ मन्दांशके भूमिसुतांशके वा मंदेक्षिते चन्द्रयुते तथैव ॥ ३ ॥ संन्यासयोगाधिपतौ सराहौ क्रूरांशके वा गुलिकेन युक्ते ॥ संन्यासवैकल्यमुदाहरंति भंगो भवेत्तस्य शुभैर्विहीने ॥ ४ ॥ इति प्रव्रज्यायोगाः ॥

अब संन्यासयोग कहते है चार ग्रह एक स्थानमे होवै उस भावका स्वामी केन्द्र त्रिकोणमे न होवे अथवा चार ग्रह केन्द्रमें होवैं तात्पर्य यह है कि चार आदि ग्रह एक स्थानमें होवैं तो मनुष्य संन्यासी ( फकीरी ) पाता है यह मुनीन्द्रोंने कहाहै ॥ १ ॥ लग्नेशपर केवल शनिकी दृष्टि होवै अन्यकी न होवे अथवा शनिको लग्नेश देखे लग्नेशको शनि देखे बलरहित होवै तो संन्यासयोग होताहै ॥ २ ॥ चन्द्रमा शनिके द्रेष्काणमे हो शनि उसे देखे तो संन्यासयोग होताहै शनिके वा मंगलके अंशकमे शनिसे दृष्ट हो अथवा चद्रमा शनिसहित होवै तो भी वही योग होताहै ॥ ३ ॥ जिस स्थानमें संन्यासयोग है उसका स्वामी राहुयुक्त होवै अथवा क्रूरांशकमें गुलिकसहित होवै तो सन्यासमें विकलता होवै यदि शुभग्रहोसे युक्त दृष्ट न होवे तो संन्यास लियेमें भी भग होजावै ॥ ४ ॥ इति सन्यासयोगाः ॥

### अथ लाभभावविचारः ।

आयेनार्थावाप्तिं पादावपि वामकर्णचिंतां च ॥ जातावपि कचकुब्जाञ्ज्येष्ठान्ब्रूयाद्धनान्यासाम् ॥ १ ॥ लाभेश्वरे केंद्रगते त्रिकोणे वा समन्विते ॥ लाभे वा पापसंयुक्ते धनलाभमुदीरयेत् ॥ २ ॥

ग्यारहवें भावसे धनप्राप्ति, पैरोंका विचार, वामकर्णका विचार, केश, कुब्जता, बडेभाई, धनादिविचार करना ॥ १ ॥ लाभेश केंद्र त्रिकोणमे हो अथवा लाभस्थानमें पापग्रहसे युक्त होवै तो धनलाभ कहना ॥ २ ॥

धनाधिपे लाभगते लाभेशे धनमागते ॥ तावुभौ केन्द्रगौ वापि धनलाभमुदीरयेत् ॥ ३ ॥ शुभमध्यगते लाभे तदीशे वा तथा स्थिते ॥ पारावतादिभागस्थे धनलाभमुदीरयेत् ॥ ४ ॥ लाभेशयुक्तराशीशे शुभग्रहनिरीक्षिते ॥ शुभग्रहाणां मध्यस्थे धनलाभमुदीरयेत् ॥ ५ ॥ लाभनाथसमायुक्तनवांशाधिपतौ शुभे ॥

पंचम सप्तम नवम द्वादश लग्न अष्टमभावमें चंद्रमा पापयुक्त होवै तो मृत्यु देता है यदि शुक्र बुध बृहस्पतिसे दृष्ट वा युक्त न हो इनसे युक्त दृष्ट होनेमें आरिष्ट नहीं होता ॥ ४४ ॥

होरास्ताष्टमगेष्वसत्सु हिमगौ क्षीणे तु जातः शिशुः स्वर्गं गच्छति सौम्यकेन्द्ररहितो जीवो न चेद्वीक्षते ॥ लग्नांत्याष्टमधर्मभेषु सहिताश्चंद्रार्कभौमार्किजाः क्षिप्रं गच्छति चांतकं सुरपतेर्मंत्री न चेद्वीक्षते ॥ ४५ ॥

पापयुक्त चन्द्रमा १ । ७ । ८ भावोंमें हो और क्षीण भी होवै तो ऐसेमे उत्पन्न हुआ बालक स्वर्ग जाता है यदि केन्द्रोंमें शुभग्रह न हों, तथा चंद्रमाको बृहस्पति न देखे और १ । १२ । ८ । ९ भावोंमें चंद्रमा सूर्य मंगल शनि होवें इनको गुरु न देखै तो शीघ्र बालक मरता है ॥ ४५ ॥

लग्ने चन्द्रे भास्करे वा वलिष्ठे पापैः केन्द्रे नैधने च त्रिकोणे ॥ शुक्रः सूर्यः शीतगुश्चैकसंस्था नाशं गच्छेद्योगमेवैति जातः॥४६॥ मेषे विंशतिभागे स्यान्मृत्युं दद्यान्निशाकरः ॥ एकविंशतिभागस्तु सिंहे तत्वैस्तु गोवृषे ॥ ४७ ॥

लग्न चंद्रमा अथवा सूर्य बलवान् होवै पापग्रह केंद्रमें हों अष्टम वा त्रिकोणमें शुक्र सूर्य चंद्रमा एकसाथ हों तो इस योगमें बालकका नाश होवै ॥ ४६ ॥ मेषके २० बीसवे अंश सिंहके २१ में वृषके २५ अंशमें चन्द्रमा बालको मृत्यु देताहै ॥ ४७ ॥

वृश्चिके च तथा चन्द्रस्त्रयोविंशतिभागकः ॥ द्वाविंशतिकुलीरे तु तुलायां वेदभागकः ॥ ४८ ॥ विंशतिर्मकरे चंद्रः कन्यायां प्रथमांशकः ॥ धनुरष्टादशो भागो मीने दशमभागयुक् ॥ ४९ ॥ द्वाविंशतिर्नृयुग्मे तु चन्द्रोप्येवं मृतिप्रदः॥ कुंभे पंचेंदुभागे च मृत्युं दद्यात्तथैव च ॥ ५० ॥ ये ये निशाकरांशास्तु मृत्युभागव्यवस्थिताः ॥ तावद्भिर्वत्सरैर्जातो मृत्युमेति न संशयः ॥ ५१ ॥ लग्नजन्मपर्योयस्तु शत्रुर्लग्नगतः शुभः ॥ करोति मृत्युं जातस्य स्वस्य धातोः प्रभावतः ॥ ५२ ॥

तैसेही वृश्चिकके २३ वें अंशमें कर्कके २२ में तुलाके ४ में ॥ ४८ ॥ मकरके २० में कन्याके १ मे धनके १८ में मीनके १० मे ॥ ४९ ॥ मिथुनके २२ में चंद्रमा मृत्यु देने-

वाला होताहै तथा कुंभके १५ वें भी मृत्यु करताहै ॥ ५० ॥ जो जो चंद्रमाके अंश मृत्युभागमें हैं उतने वर्षोंमें मनुष्य निस्संदेह मरण पाता है ॥ ५१ ॥ लग्नेश वा चंद्रराशिका शत्रुग्रह लग्नमें शुभग्रहभी होवै तोभी अपने पूर्वोक्त धातुदोषसे बालककी मृत्युकरताहै ॥ ५२ ॥

रन्ध्रे धरासूनुदिनेशसौरा जातस्तु मृत्युं समुपैति मासात्॥ केतुश्च यस्मिन्नुदितेत्र जातो मासद्वयेनैव यमं प्रयाति ॥ ५३ ॥ भूपालयोगा यवनैः प्रदिष्टा राज्ञः कुले जातनरे धरेशाः ॥ तेतिप्रयोगास्तु तदन्यजाताः सद्यो यमं यांति नरास्तथैवम् ॥ ५४ ॥ भानुर्नभस्थो यदि पापदृष्टो धरासुतर्क्षे शशिनश्च गेहे ॥ जातस्तु मृत्युं समुपैति शीघ्रं शुभैर्न दृष्टो वियुतोपि चैवम् ॥ ५५ ॥

अष्टम स्थानमे मंगल सूर्य शनि होवैं तो एक महीनेमें बालक मरे जिस लग्नमें केतुका उदय है उसमें जन्म होवै तो दो महीनेमें मरे ॥ ५३ ॥ जो राजयोग यवनाचार्यने कहेहैं उनमें राजकुलका बालक तो राजा होता है ऐसे योगोंमि अन्यका बालक जन्में तो अतिप्रयोग ( असंभव ) होनेस वह बालक तत्काल यमको प्राप्त होता है ॥ ५४ ॥ यदि पापदृष्ट सूर्य दशम भावमें मंगल वा चद्रमाकी राशिका होवै शुभग्रहोंसे युक्त वा दृष्ट न होवै तो शीघ्र बालक मरे ॥ ५५ ॥

लग्ने ये द्रेष्काणा निरर्गला हि विहंगपाशधरसंज्ञाः॥ मरणाय सप्त वर्षैः क्रूरयुताश्चापि संदृष्टाः ॥ ५६ ॥ रविचंद्रभौमगुरुभिः कुजगुरुसौरेन्दुभिस्तथैकस्थैः ॥ रविशनिभौमशशांकैर्मरणं खलु पञ्चभिर्वर्षैः ॥ ५७ ॥ रविणा युक्तः शशिजः सौम्यैर्दृष्टो विनाशयति नूनम् ॥ एकादशभिर्वर्षैर्देवांकेपि स्थितं जातम् ॥ ५८ ॥

जो लग्नमें पक्षि सर्प पाशधर द्रेष्काण क्रूरग्रहोंसे युक्त दृष्ट होवै तो सात वर्षमें मृत्यु देते है ॥ ५६ ॥ सूर्य चंद्रमा मगल गुरु अथवा मंगल गुरु सूर्य चंद्रमा यद्वा सूर्य शनि मगल चद्रमा एकस्थानमे होवें तो निश्चय पांचवर्षमें मृत्यु देतेहैं ॥ ५७ ॥ सूर्यसे युक्त बुध शुभग्रहोंसे दृष्ट होवै तो बालक देवताके गोदमेंभी बैठा हो तोभी ग्यारहवें वर्षमें मारही देताहै यह योग अन्यग्रंथोंमें नहीं देखा गयाहै ॥ ५८ ॥

लग्ने रविशनिभौमैः शुक्रगृहे वा शशी क्षीणः ॥ दृष्टो न देवगुरुणा सप्तभिरब्दैर्विनाशयति ॥ ५९ ॥ केन्द्रे रविसुपिततनुः क्षितिजो मन्दावलोकितोथ युतः ॥ वर्षचतुष्केणाशु मारयति

किमत्र गणितेन ॥ ६० ॥ लग्नाधिपतेश्चन्द्रो मरणपदस्थोपि कृष्णतां याति॥क्रूरैः सकलैर्दृष्टो न शुभैर्वर्षैस्त्रिभिस्तु मारयति ६१॥

लग्नमें सूर्य, शनि, मंगळ हों क्षीण चंद्रमा शुक्रकी राशिका होवै उसे गुरु न देखे तो ७ वर्षमें मारता है ॥५९॥ केन्द्रमें अस्तंगत मंगल शनिसे दृष्ट वा युक्त होवै तो चार वर्षमें मारताहै इसमें गणितायुकाभी प्रयोजन नहीं है॥६०॥ लग्नेशसे चंद्रमा अष्टम होवै कृष्णपक्षका जन्म हो सभी पापग्रह उस चंद्रमाको देखें शुभग्रह न देखें तो ३ वर्षमें मारताहै ॥ ६१ ॥

पापो विलग्नाधिपतिः शशांकादंत्यस्थितः क्रूरनिरीक्षितश्चेत् ॥ चन्द्रांशकस्थो यदि वा तदीशो जातः शिशुः प्रेतपुरीं नवाब्दैः॥ ॥ ६२ ॥ दृश्ये भागे संयुताः सौम्यखेटाः पापाः सर्वे यस्य जन्मन्यदृश्ये ॥ राहौ लग्ने पापयुक्तेथ दृष्टे जातो मृत्युं याति पंचाब्दसंख्यैः ॥ ६३ ॥

लग्नेश पापग्रह चन्द्रमासे बारहवें भावमें पापदृष्ट होवैं अथवा ऐसे योगमें चंद्रराशीश पापांशकमें होवै तो बालक ९ वर्षमें यमपुरी पहुंचे ॥ ६२ ॥ जिसके जन्ममें शुभग्रह दृश्यार्ध ४ से १० पर्यंत और पापग्रह अदृश्य भागमें हों राहु लग्नमें पापयुक्त वा दृष्ट होवै तो बालक पांचवेंमें मरजावै ॥ ६३ ॥

राहुः सप्तमभवने शशिसूर्यनिरीक्षितो न शुभदृष्टः॥दशभिर्द्वाभ्यां सहितैरब्दैर्जातं विनाशयति नूनम् ॥ ६४ ॥ घटालिसिंहे फणिनाथयुक्ते तस्मिन्विलग्ने सति पापदृष्टे ॥ जातो यमं सप्तदशे प्रयाति वर्षैन्द्रपूज्येन युतो न दृष्टः ॥ ६५ ॥

सप्तम भावमें राहु सूर्य चन्द्रमासे दृष्ट हो शुभग्रह उसे न देखें तो बालकको १२ वर्षमे नाश करे यह निश्चय है ॥ ६४ ॥ राहु ११।८।५ राशिका लग्नमें हो उसे पापग्रह देखें और उसको बृहस्पति न देखे न उसके साथ होवै तो बालक १७ वें वर्षमें मरे ॥ ६५ ॥

क्षीणेन्दुः पापसंदृष्टो राहुदृष्टो विशेषतः ॥ जातो यमपुरं याति दिनैः कतिपयैः किल ॥ ६६ ॥ जन्मेशलग्नाधिपती विलग्नात्षष्ठाष्टमांत्येषु दिनेशयुक्तौ ॥ जातो यमं द्वादशभिश्च वर्षैः प्रयाति सौम्येन युतौ न दृष्टौ ॥ ६७ ॥ होराधिपतिर्द्यूने पापजितो मरणमेव विदधाति ॥ राशिं त्रिगुणीकृत्वा वर्षं मासे न संदेहः ॥ ६८ ॥

क्षीण चन्द्रमा पापदृष्ट हो विशेषतः राहुदृष्ट होवै तो निश्चय कुछेक दिनोंमें बालक मरै ॥ ६६ ॥ जन्मलग्नेश तथा चन्द्रराशीश लग्नसे ६।८।१२ भावोंमें सूर्यसे युक्त होवैं शुभग्रहोंसे युक्त दृष्ट न हों तो १२ वर्षमें यमपुर जावै ॥ ६७ ॥ लग्नेश सप्तम स्थानमें ( पापजित ) पापग्रहसे युद्धमें पराजित होवै तो जिस राशिमें है उसको त्रिगुण करके जो अंक हो उतनवें महीने वा वर्षमें निःसंदेह मरण करताहै ॥ ६८ ॥

तरणीन्दुकुजाः पुत्रस्थाने युक्ता न सौम्यगाः ॥ जातो यमपुरं याति नवमेऽब्दे न संशयः ॥ ६९ ॥ लग्नेश्वरे विलग्नस्थे पापैः सर्वैरदृश्यगैः ॥ चतुर्थे मासि मरणं याति बालो न संशयः॥७०॥ चन्द्रलग्नाधिपः सूर्यः स्वपुत्रेण समन्वितः ॥ लग्नादष्टमराशिस्थो द्वादशाब्दे मृतिप्रदः ॥ ७१ ॥ षष्ठाष्टमे पापयुते सौम्यदृष्टिविवर्जिते॥ आपोक्लिमे त्रिलग्नेशे षोडशे निधनं व्रजेत् ॥ ७२ ॥

सूर्य चंद्रमा मंगल पंचमभावमें शुभग्रहोंसे युक्त दृष्ट न होवैं तो नवमवर्षमे निस्संदेह यमालय जाता है ॥ ६९ ॥ लग्नेश लग्नमें और सभी पापग्रह ( अदृश्यार्द्ध ) ११ से ३ भावपर्यंत होवैं तो निस्संदेह बालक चौथे महीने मरजावै ॥ ७० ॥ चंद्रराशिश सूर्य शनिसे युक्त अष्टम भावमें होवै तो १२ वें वर्ष मृत्यु करताहै ॥ ७१ ॥ वही सूर्य पापयुक्त ६।८ भावमें शुभग्रह दृष्टिरहित हो तथा लग्नेश आपोक्लिमें ३।६।९।१२ मे से किसीमें होवै तो १६ वर्षमें मृत्यु होवै ॥ ७२ ॥

परस्परक्षेत्रसमास्थितौ वा लग्नेशरन्ध्राधिपती न सौम्यै ॥ रिष्फारिभे वागधिपेन युक्ते त्वष्टादशाब्दे निधनं प्रयाति ॥७३॥ केन्द्रेषु पापेषु निशाकरेण सौम्यग्रहैर्वीक्षणवर्जितेषु ॥ षष्ठाष्टमे वा यदि वा शशांके जीवेच्छिशुर्विंशतिवर्षमात्रम् ॥ ७४ ॥

लग्नेश अष्टमेश अन्योन्य राशियोंमें शुभग्रह योग रहित होवें अथवा ६।१२ भावमें पंचमेशसे युक्त होवें तो १८ वर्षमें मृत्यु होवै ॥ ७३ ॥ केन्द्रोंमें पापग्रह चंद्रमा शुभग्रहोंकी दृष्टिसे वर्जित होवै अथवा केन्द्रोंमें पापग्रह हुयेमें चंद्रमा ६।८ भावमें होवै तो बालक बीस २० ही वर्ष जीवै ॥ ७४ ॥

जीवेन सहितः सूर्यो लग्नस्थः कीटराशिगः ॥ अष्टमाधिपतौ केन्द्रे द्वाविंशे मरणं ध्रुवम् ॥ ७५ ॥ राहुणा सहित चन्द्रे जामित्रे चाष्टगेऽपि वा ॥ देवेज्ये लग्नगेहेऽस्मिन् द्वाविंशे मरणं भवेत्॥७६॥

पापद्वयांतरस्थे तु होरानाथे न सौम्यगे ॥ पितृजन्मनि जातस्तु पंचविंशे यमं व्रजेत् ॥७७॥ मंदोदये शत्रुराशौ सौम्यैरापोक्लिमोपगैः ॥ षड्विंशे सप्तविंशे वा मरणं भवति ध्रुवम् ॥ ७८ ॥

बृहस्पतिसहित सूर्य कीट ४ राशिका लग्नमें होवै अष्टमेश केन्द्रमें होवै तो २२ वें वर्ष मृत्यु होवै ॥ ७५ ॥ राहुसहित चन्द्रमा सप्तम वा अष्टमभावमें होवै बृहस्पति लग्नमें होवै तो २२ वर्षमें मृत्यु होवै ॥ ७६ ॥ लग्नेश दो पापग्रहोंके बीचमें शुभग्रहरहित होवै और पिताके जन्मलग्नमें जन्म होवै तो २५ वर्षमें मरे ॥ ७७ ॥ लग्नमें शनि शत्रुराशिका होवै शुभग्रह आपोक्लिम ३।६।९। १२ में हों तो २६ वा २७ वर्षमें निश्चय मरे ॥ ७८ ॥

चन्द्रो मन्दसहायस्तु सूर्यश्चाष्टमसंयुतः ॥ एकोनत्रिंशके वर्षे जातो यमपुरं व्रजेत् ॥ ७९ ॥ पापा जन्माष्टमार्गस्थाः सौम्याः केन्द्रबहिस्थिताः ॥ अस्मिन् योगे समुत्पन्ने त्वष्टाविंशे मृतिर्भवेत् ॥ ८० ॥ जन्मरन्ध्रपयोर्मध्ये निशानाथे व्यये गुरौ ॥ सप्तविंशतिवर्षे वा त्रिंशद्वर्षेपि वा मृतिः ॥ ८१ ॥ रन्ध्रेशे जीवसंदृष्टे पापे पापनिरीक्षिते ॥ रन्ध्रस्थे जन्मपे वापि अष्टाविंशे मृतिर्भवेत् ॥ ८२ ॥ अष्टमाधिपतौ केन्द्रे लग्ने तु बलवत्तरे ॥ त्रिंशद्वर्षाण्यसौ जीवेद्द्वात्रिंशद्वाथ जातकः ॥ ८३ ॥ लग्नादष्टमराश्यंशे भानुपुत्रसमन्विते ॥ पापे बलाधिके लग्ने केन्द्राद्बाह्ये शुभे तथा ॥ ८४ ॥ अन्योन्यसंगतौ क्रूरौ लग्नस्थौ पापवीक्षितौ ॥ द्वादशे शीतरश्मौ च परमायुस्तथैव हि ॥ ८५ ॥

चंद्रमा शनिसे संबंधी होकर अष्टमभावमें होवै सूर्यभी अष्टमभावमें होवै तो २९ वें वर्ष यमपुरमें जावै ॥ ७९ ॥ पापग्रह १ । ८ । ७ भावोंमें होवें शुभग्रह केन्द्रोंसे बाहर होवें इस योगमें जो उत्पन्न हो उसकी मृत्यु २८ वर्षमें होवै ॥ ८० ॥ चन्द्रमा लग्न तथा अष्टमेशके बीचमें हो बृहस्पति बारहवां होवै तो २७ वा ३० वर्षमें मृत्यु होवै ॥ ८१ ॥ अष्टमेशपर बृहस्पतिकी दृष्टि होवै अष्टमेशभी पापग्रह हो पापग्रह उसे देखे अथवा लग्नेश अष्टममें होवै तो २८ वर्षमें मृत्यु होवै ॥ ८२ ॥ अष्टमेश केन्द्रमें अथवा लग्नमें बलवान् होवै तो वह ३० वर्ष अथवा ३२ वर्ष जीवै ॥ ८३ ॥ लग्नसे अष्टम राशि वा उसके अंशकमें शनि होवै बलाधिक पापग्रह लग्नमें होवै तथा केंद्रोंसे बाहर शुभग्रह होवें तोभी वही फल होगा ॥ ८४ ॥ अन्योन्य राशिगत पापग्रह पापदृष्ट होकर लग्नमें हों चंद्रमा बारहवां होवै तो भी उतनीही आयु होगी ॥ ८५ ॥

जन्माष्टमेशौ यदि केन्द्रयुक्तौ रन्ध्रे तु यः कश्चन खेचरेन्द्रः ॥ द्वाविंशके तन्मरणं शुभैस्तु केन्द्रेषु हीनेष्वहितैर्ग्रहेन्द्रैः ॥ ८६ ॥ क्षीणे शशांके दिवसेशयुक्ते रन्ध्राधिपे केन्द्रगतेऽष्टमेपि ॥ पापान्विते लग्नगते विहीने द्वात्रिंशदब्दे निधनं प्रयाति ॥ ८७ ॥ लग्नरन्ध्रपयोर्योगे स्फुटं तत्कृत्यसंयुतः ॥ शुभैरयुक्तः पापश्चेन्मृत्युः स्यात्सप्तविंशतौ ॥ ८८ ॥

यदि लग्नेश अष्टमेश केन्द्रमें होवे तथा अष्टमभावमें कोई ग्रह होवे और केन्द्रोंमें शुभग्रह न हों पापग्रह होवें तो २२ वर्षमें उसकी मृत्यु होवे ॥ ८६ ॥ क्षीण चन्द्रमा सूर्ययुक्त होवे अष्टमेश केन्द्रमें पापग्रह अष्टमभावमें हो हीनवली ग्रह पापयुक्त लग्नमें होवे तो ३२ वर्षमें मृत्यु को प्राप्तहोवे ॥ ८७ ॥ लग्नेश अष्टमेश एकसाथ पापग्रह हों शुभग्रहोंसे युक्त न होवें तो २७ वर्षमें मृत्यु होवै ॥ ८८ ॥

लग्नाद्विलोमे ससुतश्च चन्द्रो रन्ध्रेश्वरे केन्द्रगते ससौम्यैः ॥ दृष्टे युते वा परमायुरत्र त्रिंशत्परं नास्ति बलैर्विहीनः ॥ ८९ ॥ रन्ध्रेश्वरे भाग्यधनात्मयुक्ते लग्नाधिपे रन्ध्रयुते त्वसौम्यैः ॥ जातश्चतुर्विंशतिवर्षमात्रं जीवत्यसौ शोभनदृष्टियुक्ते ॥ ९० ॥

लग्नसे वारहवें भावमें बुधसहित चन्द्रमा होवे अष्टमेश किसी केन्द्रमें निर्बल शुभग्रहोंसे दृष्ट वा युक्त होवे तो उसकी परमायु ३० वर्षसे अधिक न होवे ॥ ८९ ॥ अष्टमेश ९ । २ । १ भावोंमेंसे किसीमें हो लग्नेश अष्टमस्थानमें पापयुत वा दृष्ट होवे उसपर शुभदृष्टिभी हो तौभी २४ वर्षमात्र जीवै ॥ ९० ॥

अष्टमाधिपतौ लग्ने लग्नेशे बलवर्जिते ॥ त्रिंशद्वर्षाण्यसौ जीवेत्त्रिंशन्नातीव वर्तते ॥९१॥ आपोक्लिमगते चंद्रे लग्नेशे च तथैव हि ॥ पापेक्षिते बलैर्हीने जीवत्यायुस्तथैव च ॥ ९२ ॥ गुरुशुक्रौ च केन्द्रस्थौ लग्नेशे पापसंयुते ॥ आपोक्लिमस्थे संध्यायामायुः षट्त्रिंशदेव हि ॥ ९३ ॥

अष्टमेश लग्नमें लग्नेश बलरहित होवे तो ३० वर्ष बचे उपरांत आयु न पावै ॥ ९१ ॥ चंद्रमा आपोक्लिम ३ । ६ । ९ । १२ भावमें से किसीमें हो ऐसाही चन्द्रमाभी आपोक्लिममें पापदृष्ट तथा बलहीन होवे तौभी उतनीही आयु होगी ॥ ९२ ॥ गुरु शुक्र केन्द्रमें हो लग्नेश पापयुत आपोक्लिममें हो और संध्याकालका जन्म होवे तो ३६ की परमायु होव ॥ ९३ ॥

लग्नस्थिते वासरनायके तु पापान्तरे शत्रुगते विहीने ॥ षट्त्रिं-
शदंतं परमायुरस्य शुभैर्न दृष्टे सति सत्यमेतत् ॥ ९४ ॥ भूसूनु-
चन्द्रौ तनुगौ शुभास्तु केन्द्राष्टमस्था न भवेयुरत्र ॥ जातो यदा
मान्द्युदये शिशुः स्यात्षट्त्रिंशकेऽब्दे निधनं प्रयाति ॥ ९५ ॥ हो-
राशास्त्राभ्यासबलात्संगृह्य विदुषां मुदे ॥ परं त्यक्त्वा त्वसारं तु
कृतं व्यङ्कटशर्मणा ॥ ९६ ॥

इति श्रीसर्वार्थचिन्तामणावरिष्टयोगनिरूपणं
नाम दशमोऽध्यायः ॥ १० ॥

सूर्यलग्नमें पापग्रहोंके बीच शत्रुराशिमें एवं निर्बल होवै और शुभग्रह उसे न देखे तो ३६ वर्ष उसकी परमायु होगी ॥ ९४ ॥ मंगल चन्द्रमा लग्नमें हो शुभग्रह केन्द्र तथा अष्टम स्थानमें न होवें और केतु लग्नमे होवे तो बालक ३६ छत्तीस वें वर्षमें मरे ॥ ९५ ॥ यह बाल्यारिष्टाध्याय होराशास्त्रके अभ्यासबलसे व्यंकटेश्वरने असारको दूर छोडके सारसंग्रह कियाहै ॥ ९६ ॥

इति श्रीसर्वार्थचिंतामणौ माहीधरभाषाटीकायामरिष्टाध्यायो दशमः ॥ १० ॥

---

## एकादशोऽध्यायः ॥ ११ ॥

अथारिष्टभङ्गाध्यायः ।

लग्नस्थितो देवगुरुर्विशेषात्खेटान्निहन्याद्विबलांस्तथैव ॥ एकोपि
बालेन्दुधरप्रणामः समस्तपापं शमयेत्तथैव ॥१॥ अत्यंतसत्वे
यदि लग्ननाथे सौम्यान्विते तादृशदृष्टिमार्गे॥केंद्रस्थिते पापदृशा
विहीने स भाग्यवान् जीवति दीर्घमायुः ॥ २ ॥

बाल्यारिष्टहारक ग्रहोंमें विशेषतः लग्नका बृहस्पति अरिष्टकर्ता निर्बल ग्रहोंके फलोंको नाश करदेताहै जैसे एक शिवजीको प्रणाम करना समस्तपापोंको नाश करदेताहै ॥ १ ॥ लग्नेश अतिबलवान होवै शुभग्रहोंसे दृष्ट वा युक्त होकर केन्द्रमें बैठा होवे पापदृष्टिरहित होवे तो वह बालक भाग्यवान् एवं दीर्घायु होताहै ॥ २ ॥

शशांको रन्ध्रनाथस्तु सौम्यद्रेष्काणसंयुतः ॥जातं शिशुं प्रयत्नेन
रक्षयेद्रात्रिवासरम् ॥३॥ चन्द्रः संपूर्णगात्रस्तु सौम्यक्षेत्रांशगोपि

वा॥सर्वारिष्टनिहन्ता स्याद्विशेषाच्छुक्रवीक्षितः ॥४॥ जीवभार्गववसौम्यानामेकः केन्द्रगतो बली ॥ पापदृग्योगहीनश्चेत्सद्योरिष्टस्य भंगकृत् ॥ ५ ॥ चन्द्रोपि शत्रुराशिस्थो जीवशुक्रविदां यथा ॥ द्रेष्काणं शमयत्येवारिष्टं पापं हरिर्यथा ॥ ६ ॥

अष्टमेश चन्द्रमा शुभग्रहके द्रेष्काणमें होवै तो दिनरात यत्नसे बालककी रक्षा करनी र्यात् दिनरात यह बालक क्लेशी रहकर बच जाताहै॥ ३॥पूर्णचन्द्रमा शुभग्रहके राशिमें अथवा शकमे होवै तो समस्त बाल्यारिष्टोंका नाश करताहै विशेषतः शुक्रसे दृष्ट यह फल करताहै ॥ ४ ॥ बृहस्पति शुक बुधमेंसे एकभी केन्द्रमें बलवान् होवै पापग्रहोसे युक्त दृष्ट न होवै तो त्काल अरिष्टभंग करताहै ॥ ५ ॥ चन्द्रमा शत्रुराशिमे भी होवै परंतु बृहस्पति शुक बुध के द्रेष्काणमें होवै तो अरिष्टको शमित करदेताहै जैसे श्रीहरि पापको शमन करतेहैं ॥ ६ ॥

शुक्लेऽपि पक्षे यदि रात्रिजन्म चन्द्रोपि षष्ठाष्टमराशियुक्तः ॥शुभेक्षितः सन्निह कृष्णपक्षे दृश्यः स पापैरवति प्रसूतम्॥७॥ निशाकरे शोभनखेचरांशे शुभेक्षिते पूरितदीप्तिजालः॥ जातस्य निःशेषमरिष्टमाशु यथा विषं हन्तिच वैनतेयः ॥८॥ प्रकाशमानो गगनेन्द्रपूज्यः केन्द्रस्थितो रक्षति जातसूनुम् ॥ सौम्यांशका जीवशशांकशुक्रसौम्या विनिघ्नन्ति समस्तदोषम् ॥ ९ ॥ जन्माधिपः केन्द्रगतः शुभश्चेज्जातं शिशुं रक्षति सौम्यदृष्टः ॥ स्वांशस्थितैः शोभनखेचरेन्द्रैर्दृष्टस्तदान्यो विनिहंत्यरिष्टम् ॥ १० ॥

शुक्लपक्षमें रात्रिका जन्म हो चंद्रमा छठे वा आठवें भावमें शुभदृष्ट होवै और कृष्णपक्षमें दिनका जन्म चंद्रमा ६ । ८ भावमें पापदृष्टभी हो तौभी बालककी रक्षा करताहै ॥ ७ ॥ चंद्रमा शुभग्रहके अंशकमें शुभदृष्ट पूर्णमण्डल होवै तो बालकके संपूर्ण अरिष्टोंको नाश करताहै जैसे गरुड विषका नाश करताहै ॥ ८ ॥ उदयी बृहस्पति केन्द्रमें होवै तो बालककी रक्षा करताहै गुरु शुक चंद्रमा बुध शुभांशकोंमें होवैं तौभी संपूर्ण अरिष्टयोग फलको नाश करतेहैं ॥ ९ ॥ जन्मलग्नेश शुभग्रह केन्द्रमें शुभदृष्ट होवै तो बालककी रक्षा करताहै लग्नेश शुभ पापोंसे कोई हो उसे अपने अंशकस्थित शुभग्रह देखें तो वहभी अरिष्टहंता होताहै ॥ १० ॥

लग्नात्तृतीयारिभवे च राहुः पापैर्विमुक्तः शुभदृश्यमानः॥विनाशयत्याशु समस्तरिष्टं तूलं यथा वायुबलस्य वेगः ॥ ११ ॥ शीर्षोदयस्थाः सकला ग्रहेन्द्रा रिष्टं हरन्त्याशु शुभांशकस्थाः ॥

पूर्णेन्दुरन्यैर्विद्युतः शुभैस्तु दृष्टो हरत्याशु समस्तरिष्टम् ॥१२॥ सर्वग्रहेन्द्रैः परिपूर्णचन्द्रो दृष्टो हरत्याशु समस्तदोषान् ॥ नयैः स्वकीयैः प्रहरेत् क्षितीशो यथा तथा जन्मनि दोषजालम् ॥ ॥ १३ ॥ सौम्यग्रहैरतिबलैर्विबलैश्च पापैर्लग्ने च सौम्यभवनं शुभदृष्टियुक्तम् ॥ सर्वापदां विहरतो भवति प्रसूतिः पूजापरे खलु यथा पठनैर्ग्रहाणाम् ॥ १४ ॥

राहु लग्नसे तीसरा छठा ग्यारहवां पापरहित शुभग्रह दृष्ट होवै तो समस्त बाल्यारिष्ट शीघ्र नाश करताहै. जैसे वायुका बल वेग रुईका गल्ला उडादेताहै ॥ ११ ॥ समस्तग्रह शीर्षोदय ५ । ६ । ७ । ८ । ११ । ३ राशियोंमें शुभ ग्रहोंके अंशकोंमें होवे तो अरिष्टको नाशतेहैं पूर्ण चद्रमा पापग्रहरहित तथा शुभदृष्ट होवै तोभी संपूर्णदोष दूर करताहै ॥ १२ ॥ पूर्ण चद्रमापर सभी ग्रहोंकी दृष्टि होवै तौभी वही फल होगा जैसे राजा अपने न्यायोंसे समस्त प्रजाके दोषोंके दूर करताहै ॥ १३ ॥ शुभग्रह अतिबलवान् होवै पापग्रह निर्बल होवें तथा लग्नमें शुभग्रहकी राशि शुभग्रहसे दृष्ट होवै ऐसे समयमें जन्म होवै तो संपूर्ण आपत्तियोंसे रहित होवै. जैसे ग्रहोंकी पूजामे ग्रहोंके स्तोत्रादि पाठमें तत्पर मनुष्योंकी आपत्ति दूर होतीहै ॥ १४ ॥

उदयोगस्त्यमुनेः सप्तर्षीणां मरीचिपूर्वाणाम् ॥ सर्वारिष्टं नश्यति तम इव सूर्य्योदये प्रबलम् ॥ १५ ॥ अजवृषकर्किणि लग्ने रक्षति राहुः समस्तपीडाभ्यः ॥ पृथिवीपतिः प्रसन्नः कृतापराधं यथा पुरुषम् ॥ १६ ॥ चंद्रः शुभवर्गस्थः क्षीणोपि शुभेक्षितो हरति रिष्टम् ॥ जलमिव हंत्यतिसारं जातीफलवल्कलक्वथितम् ॥ १७ ॥ सप्ताष्टमषष्ठस्थाः शशिनः सौम्या हरंति कष्टफलम् ॥ युवतिजनस्य कटाक्षा ललिता यूनां यथा नूनम् ॥ १८ ॥

जन्म समयमें अगस्त्य मुनिका उदय तथा मरीचि आदि सप्तर्षियोंका उदय समस्त अरिष्ट नाश करता है जैसे प्रबल अधकारको सूर्योदय नाश करता है ॥१५॥ मेष वृष कर्क राशिका राहु लग्नमें होवै तो समस्त पीडाओंसे रक्षा करताहै जैसे अपराधी पुरुषको प्रसन्न हुआ राजा बचाय देताहै ॥ १६ ॥ चद्रमा क्षीणभी हो परन्तु शुभग्रहोंके षड्वर्गादि वर्गमें होवै तो अरिष्ट हरण करताहै जैसे अतिसारको जातीफलके बकलोंमें पकाया पानी हर लेताहै ॥ १७ ॥ चद्रमासे ७ । ८ । ६ स्थानोंमें शुभग्रह होवें तो कष्टफलका हरण करतेहै जैसे जवान स्त्रियोंके सुहावने कटाक्ष युवाजनोंके कष्ट दूर करतेहैं ॥ १८ ॥

पापराशिगते चंद्रे तदीशेन निरीक्षिते ॥ सौम्यग्रहाणां वर्गस्थे कृपणेन धनं यथा ॥ १९ ॥ चंद्राधिष्ठितराशीशे लग्नस्थे शुभवीक्षिते ॥ भृगुणा वीक्षिते चंद्रे स्वोच्चे रिष्टं हरेत्तदा ॥ २० ॥ स्वोच्चस्थे स्वगृहेथ वापि सुहृदां वर्गे स्वकीयेथ वा संपूर्णः शुभवीक्षितः शशधरो वर्गेषु सौम्येषु वा ॥ शत्रूणामवलोकनेन रहितः पापैरयुक्तेक्षितो रिष्टं हंति सुदुस्तरं दिनमणिः प्रालेयनाशं यथा ॥ २१ ॥ अध्यायोरिष्टभंगाख्यः प्रोक्तश्चिंतामणौ मया ॥ मधुवृत्त्या गृहीत्वा तु व्यंकटेश्वरशर्मणा ॥ २२ ॥

इति श्रीसर्वार्थचिंतामणावरिष्टभङ्गनिरूपणो नाम एकादशोध्यायः ॥ ११ ॥

चंद्रमा पापराशिमें हो उस राशिका स्वामी उसे देखे और शुभग्रहोंके अंशादिमे होवे तो बालककी रक्षा करताहै जैसा कृपण मनुष्य धनकी रक्षा करताहै ॥ १९ ॥ चंद्रमा राशीश लग्नमें शुभग्रह दृष्ट होवे तथा चंद्रमाको शुक्र देखे उच्चमें होवे तो अरिष्टको हरताहै ॥ २० ॥ पूर्णचंद्रमा शुभग्रहोंसे दृष्ट होकर अपने उच्च वा स्वगृहमें हो अथवा मित्रके वर्गमें हो अथवा अपने वर्गमें हो यद्वा मित्रके वर्गमें हो शत्रुदृष्टिसे रहित पापयोगदृष्टि रहित होवे तो कठिन अरिष्टको भी दूर करताहै जैसे सूर्य बर्फका नाश करताहै ॥ २१ ॥ मुझ व्यंकटेशने माधुकरीवृत्तिसे अनेक ग्रंथोंका सार लेकर यह अरिष्टभंगाध्याय कहा ॥ २२ ॥

इति स० चिं० म० माहीधरभाषाटीकायामरिष्टभङ्गाध्याय एकादशः ॥ ११ ॥

---

## द्वादशोऽध्यायः ॥ १२ ॥

अथ मध्यमायुर्योगविचाराध्यायः ।

द्वात्रिंशदूर्ध्वमर्वाक्तः सप्तत्या मध्यमायुर्योगान् ॥ तावत्कालनियमितान् योगविशेषानहं वक्ष्ये ॥ १ ॥ चंद्रे कुजर्क्षे तनुगे प्रदृष्टे क्रूरग्रहैः शोभनखेचरेन्द्रैः ॥ केन्द्राद्बहिष्ठैर्निधनं प्रयाति वर्षैस्त्रयस्त्रिंशसमानकैस्तु ॥ २ ॥ पापग्रहे रंध्रपतौ सचंद्रे केंद्रस्थिते वा यदि वा त्रिकोणे ॥ निरीक्षिते पापखगैर्नभस्थैर्जातस्त्रयस्त्रिंशदुपैति वर्षम् ॥ ३ ॥

अत्र मध्यमायुयोग कहतेहैं कि ३२ वर्षसे ऊपर ७० वर्षके भीतर आयुके योगविशेषमें ग्रंथकर्त्ता कहताहै॥१॥चंद्रमा मंगलकी राशिका लग्नमें पापग्रहोंसे दृष्ट होवै शुभग्रह केंद्रमे न होवें तो ३२ वर्ष आयु होवै॥२॥अष्टमेश पापग्रह चंद्रमा सहित केन्द्र अथवा त्रिकोणमें होवै उसे पापग्रह दशम भावमें बैठकर देखें तो मनुष्यकी ३२ वर्ष आयु होवै ॥ ३ ॥

लग्ने शनौ रात्रिकरेण युक्ते भौमे घटस्थे सुरसंख्यवर्षैः ॥ क्रूरांतरे लग्नगते तदीशे युग्मस्थिते देवगुरौ पुरस्थे ॥ ४ ॥ जातस्तु मृत्युं मुनिवह्निवर्षैः प्रयाति शास्त्रप्रवरैः प्रदिष्टम् ॥ सभूमिजे रंध्रपतौ विलग्ने राशौ स्थिरे वा यदि वा धराजे ॥ ५ ॥ रिष्फेष्टमे मृत्युमुपैति जातस्त्वब्दैर्द्विपाथोधिसमानकैर्वा ॥ केन्द्रे गुरौ कर्मणिं सूर्यपुत्रे लग्ने चरे वेदयुगैः समानैः ॥ ६ ॥

लग्नमें चंद्रमासहित शनि होवै मंगल कुम्भका होवै तो ३२ वर्ष आयु होवै लग्न पापांतर हो लग्नेश मिथुनका होवै और बृहस्पति चतुर्थ होवै ॥४॥ तो जातक ३७ वर्षमें मृत्युको प्राप्त होताहै यह शास्त्रज्ञोंने कहाहै, लग्नमे मगल सहित अष्टमेश होवै यद्वा मंगल स्थिरराशिमें अष्टम वा बारहवें भावमें होवै तो ४२ वर्षमे मृत्यु होवै बृहस्पति केंद्रमें शनि दशम होवै लग्नमें चरराशि होवै तो ४४ वर्ष आयु होवै ॥ ५ ॥ ६ ॥

गुरुशुक्रौ च केन्द्रस्थौ लग्नेशे पापसंयुते॥आपोक्लिमस्थे संध्यायामायुः षट्त्रिंशदेव हि ॥ ७ ॥ स्वोच्चे विलग्ने रविनंदने च जीवेस्तगे कर्मणि सूर्यपुत्रे ॥ जातो धनाढ्यो बहुशास्त्रवेत्ता वेदाब्धिवर्षैर्निधनं प्रयाति ॥ ८ ॥ लग्नेश्वरे रंध्रगते सपापे केंद्राद्बहिष्ठे यदि सौम्यखेटे ॥ चत्वारिंशद्वत्सरे मृत्युमेति जातः पुत्रो नान्यथा शास्त्रमेतत् ॥ ९ ॥

गुरु शुक्र केन्द्रमें हों लग्नेश पापयुक्त होकर २ । ५ । ८ । १२ भावमें से किसीमें हों और संध्याकालका जन्म होवै तो ३६ वर्ष आयु होवै॥७॥उच्चका शनि लग्नमे बृहस्पति सप्तम शनि दशम होवै तो मनुष्य धनवान् तथा बहुत शास्त्र जाननेवाला होवै ४४ वर्षमें मरजावै ॥ ८ ॥ लग्नेश पापयुक्त अष्टमस्थानमें हो शुभग्रह केंद्रोंमें न हों तो ऐसे योगमें जन्मवाला पुत्र ४४ वर्षमें मृत्युको प्राप्त होताहै यह शास्त्राज्ञा झूठी नहींहै ॥ ९ ॥

जन्माधिपे रंध्रगते सपापे पापान्विते रंध्रपतौ रिपुस्थे ॥ बलान्विते वा शुभदृग्विमुक्ते पंचाब्धिवर्षैर्निधनं प्रयाति ॥ १० ॥

मेषे शशांके तनुगे सुपूर्णे सौम्येक्षिते भूपतिरत्र जातः ॥ पापग्रहाणां च दृशा विहीने नागाब्धिवर्षैर्निधनं प्रयाति ॥ ११ ॥

लग्नेश पापयुक्त अष्टमभावमें अष्टमेश पापयुक्त छठे स्थानमें बलवान् वा शुभदृष्टिरहित होवे तो ४५ वर्षमें मरणको प्राप्त होवै ॥ १० ॥ पूर्णचंद्रमा मेष राशिका लग्नमे शुभदृष्ट होवे तो ऐसे योगमें उत्पन्न मनुष्य राजा होवै परंतु उसे पापग्रह न देखते हों और ४८ वर्ष में मृत्युको प्राप्त होताहै ॥ ११ ॥

शनैश्चरो लग्नगतः सहायस्त्वन्येन चन्द्रो व्ययभेऽष्टमे वा ॥ वेदांतविज्ञानसुशीलवृत्तो जातस्तु मृत्युं नयनेषु वर्षे ॥ १२ ॥ चापे गुरौ लग्नगतेऽष्टमस्थे भौमे सराहौ मुनिबाणवर्षे ॥ रन्ध्रेश्वरे कामगते शशांके पापान्विते षण्मृतिगेऽष्टबाणे ॥ १३ ॥ संरध्रपे देवगुरौ विलग्ने कुंभे सपापे यदि केन्द्रराशौ ॥ शास्त्रार्थवेत्ता खलु पुण्यवांश्च जातस्तु षष्ट्या निधनं प्रयाति ॥ १४ ॥

शनि किसी ग्रहके साथ लग्नमें होवे चंद्रमा ८ वा १२ भावमें होवे तो वेदांतके ज्ञानसे उत्तम स्वभाव एवं चरितवाला होव और ५२ वर्षमें मृत्यु पावै ॥ १२ ॥ धनका बृहस्पति लग्नमें अष्टममें मंगल राहुसहित होवे तो ५७ वर्षमें और अष्टमेश सप्तम चंद्रमा पापयुत ६।८ भावमें होवै तो ५८वर्षमें मरे ॥ १३ ॥ गुरु लग्नमें अष्टमेश सहित होवै अथवा कुंभका गुरु पापग्रह सहित केन्द्रमें होवे तो शास्त्रोंका अर्थ जाननेवाला तथा पुण्यवान् होवे और ६० वर्षमें मृत्यु पावै ॥ १४ ॥

केन्द्रे सपापे तनुपे व्ययस्थे लग्नेश्वरे रन्ध्रगते हि वह्नौ ॥ लोकान्तरं प्रापयति स्म जातं कुशीलवृत्तं कुलपांसनं तम् ॥ १५ ॥ सारो विलग्ने हिबुके शशांके कुजे कलत्रे गगने दिनेशे ॥ कर्वीज्यसौम्येष्विहर्हतयुतेषु नरेश्वरो जीवति वर्षषष्ट्या ॥ १६ ॥

केंद्रमें पापसहित लग्नेश हो अथवा सपाप लग्नेश व्ययभावमें हो अष्टमभावमें होवे तो वह मनुष्य दुष्ट स्वभाव चरित्र तथा कुलनाश करनेवाला होवै और अग्निमें जलकर मरे ॥ १५ ॥ लग्नमें शनि, चतुर्थ चन्द्रमा, सप्तममें मंगल, दशममें सूर्य होवे गुरु बुध लग्नमें से किसीसे युक्त होवे तो राजा होवै ६० वर्ष जीवै ॥ १६ ॥

लग्नाभिधाने विबुधारिपूज्ये बुधेज्यचंद्रैः परिदृश्यमाने ॥ जातं नरं भूमिपतिं धनाढ्यं करोति षष्ट्या सुतभेन्द्रपूज्ये ॥ १७ ॥ सिते

विलग्ने बुधभास्करात्मजौ चतुष्टयस्थाः परमोच्चखेचराः ॥ तृतीयलाभर्क्षगतास्तु योगे महीपतिः स्यान्निधनं च षष्ट्या ॥ १८ ॥

लग्नमें शुक्र चंद्र बुध गुरुसे दृष्ट होवे तथा गुरु पंचममें होवै तो मनुष्यको राजा एवं धनाढ्य करताहे और ६० वर्ष आयु होतीहै ॥ १७ ॥ शुक्र लग्नमें होवै बुध शनि केन्द्रमें होवै और परमोच्च राशिगत ग्रह ३।११ भावमे होवै तो ऐसे योगमें मनुष्य राजा होताहै और ६० वर्ष आयु होतीहै ॥ १८ ॥

होराजन्माधिनाथौ निधनमुपगतौ मृत्युनाथे च केंद्रे योगे जातो नरोऽस्मिन् जनयति नरपं कीर्तिवित्तान्वितं च ॥ षष्ट्यां षड्भिर्युतायां निधनमभिहितं नंदकोक्ते द्विनिघ्नम् ॥ वर्षे त्रिंशेऽथ वा स्यात्खिलमिति खचरैर्जायते पार्थिवेन्द्रः ॥ १९ ॥ नक्षत्रनाथसहितः सविता नभस्थः सौरिर्विलग्नसहितो हिबुके सुरेज्यः ॥ अस्मिन् योगे जायते यो मनुष्यः क्षोणीपतिर्नैधनमष्टषष्ट्या ॥ २० ॥ जीवे विलग्ने बुधसूर्ययुक्ते मीने शनौ द्वादशगे हिमांशौ ॥ जातो योगे चार्थवान्सौख्यभाक् च जीवेत् षष्ट्या षड्सहायेन जातः ॥ २१ ॥

लग्नेश तथा तत्काल होरेश अष्टम स्थानमें होवे अष्टमेश केन्द्रमें होवै ऐसे योगमें जिसका जन्म होवै तो वह कीर्ति एवं धनयुक्त राजा होताहै ६६ वर्षमें उसकी मृत्यु होतीहे नंदकोक्त मतसे ६० वर्ष आयु इस योगमें कहीहै राजा होना उसके मतसे भी है ॥ १९ ॥ सूर्य चंद्रमा सहित दशम भावमें शनि लग्नमें गुरु चौथा होवै इस योगमें जो मनुष्य जन्मे वह राजा होताहै तथा ६८ वर्ष आयु होतीहे ॥ २० ॥ लग्नमे गुरु बुध सूर्यसहित होवे मीनका शनि किसी भावमे हो चंद्रमा द्वादश होवे इस योगमें उत्पन्न मनुष्य धनवान् सुखी होताहै और ६६ वर्षपर्यंत जीता रहे ॥ २१ ॥

चंद्रे विलग्ने स्वगृहं प्रयाते नीचे शनौ सप्तमगे च सूर्ये ॥ अस्मिन् जातो मानुषो ज्ञानिमुख्यो जीवेत्षष्टिः पंचभिः संप्रयुक्तः ॥ २२ ॥ नीचे मंदे केन्द्रगे वा त्रिकोणे सौम्ये केंद्रे भास्करे वा ससौम्ये ॥ योगे जातः पंडितो धर्मशीलो ज्ञानी प्राज्ञः सप्ततेर्वत्सराणाम् ॥ २३ ॥

चंद्रमा कर्कका लग्नमे नीचका शनि सप्तम सूर्य हो इस योगमें उत्पन्न मनुष्य ज्ञानियोंमें श्रेष्ठ होवै और ६५ वर्ष आयु होवै ॥ २२ ॥ नीचका शनि केन्द्र वा त्रिकोणमें, शुभग्रह

केंद्रमें अथवा बुधसहित सूर्य केन्द्रमें होवै तो इस योगमें उत्पन्न मनुष्य धर्म करनेवाला पंडित एवं ज्ञानी होताहै और ७० वर्षपर्यंत जीताहै ॥ २३ ॥

प्रबले केंद्रगे सौम्ये निधने सौम्यवर्जिते ॥ लग्नाधिपेन दृष्टश्चेत्पापैर्जीवति सप्ततिम् ॥२४॥ पंचमस्थे धरासूनौ नीचे मंदेस्तगे रवौ ॥ अस्मिन् जातो मनुष्यस्तु सप्तत्या निधनं व्रजेत् ॥२५॥ इत्येवं बहुधा मया निगदिता योगास्त्वसंख्या इमे ये प्रोक्ता यवनादिभिर्मुनिगणैर्निश्चित्य योगान् स्थितान् ॥ ज्ञात्वा सम्यगुदाहरंति मनसा ते यांति कीर्तिम्परामेवं प्रश्नविधौ सुजन्मसमये वैवाहिके कर्मणि ॥ २६ ॥

बलवान् शुभग्रह केंद्रमे होवै धनस्थानमें शुभग्रह न होवै लग्नेशसे दृष्ट न हो पापदृष्ट होवै तो ७० वर्ष बचे ॥ २४ ॥ मंगल पंचमभावमें शनि नीचराशिमें सूर्य सप्तमभावमें होवै इस योगमें उत्पन्न मनुष्य ७० वर्षमें मरे ॥ २५ ॥ ग्रंथकर्ताका कथन है कि इसप्रकार योग मैंने कहेहैं परंतु ऐसे योग असंख्य हैं जो यवनाचार्यादि मुनिगणोंने कहेहैं उनमें जो वर्त्तमान योग हैं उनको मनमें निश्चय करके जो फल कहतेहैं वह परम कीर्त्तिको प्राप्त होतेहैं ऐसे योगोंका विचार जन्ममें प्रश्नमें और विवाहमें भी करना ॥ २६ ॥

### अथ दीर्घायुर्योगाः ।

दीर्घायुराप्नोति खगाः समस्ताः शुभाशुभाः पड्भवनांतरस्थाः ॥ लग्नात्तथैवापरभागयुक्ताः शुभाशुभास्तद्विपरीतमन्यत् ॥ २७ ॥ लग्नादिषट्के शुभखेचरेन्द्राः सर्वे बलाढ्यास्त्वपरे तु पापाः ॥ प्रदीप्तियुक्तो गुणवान् सुशीलः श्रीमानशीत्या निधनं प्रयाति ॥ २८ ॥

अब दीर्घायुयोग कहतेहैं- शुभाशुभ सभी ग्रह लग्नसे छठे भावपर्यंत हों अथवा सप्तमसे व्ययपर्यंत होवें तो दीर्घायु ७० से ऊपर आयु मिलतीहै और प्रकार होनेमें विपरीत फल होताहै ॥ २७ ॥ यदि लग्नसे छठे भावपर्यंत बलवान् शुभग्रह और दूसरे भाग ७ से १२ पर्यंत बलवान् पापग्रह होवें तो गुणवान् उत्तम स्वभाव लक्ष्मीवान् होताहुआ ८० वर्षमें मरताहै ॥ २८ ॥

लग्ने केन्द्रे शशिसुते कोणे चंद्रे शुभे शनौ ॥ जातस्तु देवमुनिभिर्वर्षैः क्लिश्यत्यतः सुखम् ॥ २९ ॥ ओजराशिगताः सर्वे पूर्णच-

न्द्रसमन्विताः ॥ओजलग्ने परं भाग्यं दीर्वमायुरुपैति सः॥३०॥ समराशिगताः सर्वे पूर्णचंद्रसमन्विताः ॥ स्त्रीयास्तु जननं युग्मलग्ने भाग्यमुपैति सा ॥ ३१ ॥ भाग्ययोगेषु दीर्घायुर्वदन्ति यवनादयः ॥ तत्पथक् पृथगेवाहुर्वराहमिहिरादयः ॥ ३२ ॥

लग्नमें वा अन्यकिसी केन्द्रमे बुधहो ५ । ९ भावमें चंद्रमा दशममे शनि होवै तो मनुष्य ४० वर्षपर्यंत क्लेशी उपरांत सुखी रहे ॥ २९ ॥ पूर्णचद्रमा सहित सभी ग्रह विषम राशियोंमें होवें लग्नमेंभी विषमराशि होवें तो परम ऐश्वर्य तथा दीर्घायु मिलतीहै ॥ ३० ॥ समस्त ग्रह पूर्ण चद्रमासहित समराशियोंमें होवें समराशिही लग्नमें होवै तो ऐसे योगमें स्त्रियोंका जन्म भाग्य एवं आयु देनेवाळा होताहै ॥३१॥ भाग्ययोगोमें दीर्घायुभी होनी यवनादि कहतेंह परतु वराहमिहिरादि उनको अलग २ कहतेंहं क्योंकि कोई धनहीनभी दीर्घायु होतेहैं ॥ ३२ ॥

यत्र तत्र तयोर्योगस्तदिष्टं मम संमतम् ॥ कदाचित् कांतयोर्योगः सर्वथा न भवेत्तदा ॥ ३३ ॥

ग्रंथकर्ताकी संमति है कि जहां कही भाग्य और दीर्घायु योग मिलतेहै तहां ऐश्वर्य और दीर्घायुभी होतेहैं परंतु ऐसे योग कदाचित् मिलतेहै सर्वथा नहीं होते राजयोग जुदेहे दीर्घायु जुदेहै जहां धनैश्वर्य सहित दीर्घायु कहीहै तहांही दोनोंकी माप्ति है और राजयोग एक काही फल होताहे इसीलिये पहिले और आधेभी वैसे योग पृथक् इस ग्रथमे लिखेंह ॥ ३३ ॥

जीवे सचंद्रे केन्द्रस्थे सौम्यदृष्टे परे ग्रहाः ॥ दशमात्परतो युक्तास्त्वशीत्या निधनं भवेत् ॥ ३४ ॥ चतुष्टयगताः सौम्याः पापाश्चाष्टभवर्जिताः ॥ चंद्रो विलग्नात्षष्ठस्थः षडशीत्या यमं व्रजेत् ॥ ३५ ॥ पापास्त्रिलाभषष्ठस्थाश्चंद्रः षष्ठाष्टमं गतः ॥ केंद्रे गुरौ त्रिसाहस्रग्रामनाथाश्चिरायुषः ॥ ३६ ॥

गुरु चंद्रमासहित केन्द्रमें शुभदृष्ट होवै और सभी ग्रह दशमभावसे ऊपर ११ । १२ में
चंद्रे विलग्न रु मृत्यु होवै ॥ ३४ ॥ शुभग्रह केन्द्रमे होवे पापग्रह अष्टमभावमें न होवै
जातो मानुपो ावमें होवै तो ८६ वर्षमें यमपुर जावै ॥ ३५ ॥ पापग्रह ३ । ११ । ६
। तो ८६ वर्षमें द्रे केन्द्रे मे और गुरु केन्द्रमें होवै तो तीनहजार ग्रामके अधिपति और दीर्घायु
लग्नसे छठे भ तः पंडि
म चद्रमा ६ । नेधनायकेंद्रे ग्रहास्त्रयः पंच पयोधिसंख्याः॥ जातः
० ॥ ३६ ॥ का लग्नमे
६५ वर्ष ततोंद्रियस्तु जीवेत्स यत्नान्नृपतिः परे हि ॥ ३७ ॥

जीवे लग्नेश्वरात्केन्द्रे केन्द्रकोणविवर्जिताः ॥ पापाः सुखानि सत्वात्तु जीवेद्वर्षशतं नरः ॥ ३८ ॥ जीवे लग्नेश्वरात्केन्द्रे नियतिः सप्ततिः परा ॥ ३९ ॥

लग्नसे ५ । ९ । ८ । १ । ४ । ७।१० भावमेंसे किसीमें तीन चार वा पांच ग्रह होवें तो मनुष्य स्त्री पायकेभी जितेंद्रिय होवै दीर्घजीवीभी होवै कोई आचार्य ऐसे योगमें रा । होना भी कहतेहैं ॥ ३७ ॥ गुरु लग्नेशसे केन्द्रमें होवै, पापग्रह केन्द्रकोणमें न होवें तो सुखस पुष्टिसहित सौवर्ष जीवै ॥ ३८ ॥ केवल गुरु लग्नेशसे केंद्रमें ७० वर्ष जिलाताहै ॥ ३९ ॥

केन्द्रे गुरौ लग्नगते दिनेशे भूसूनुयुक्ते यदि वा मृतिस्थे ॥ जातः श्रियं प्राप्य गुणाधिकारी शतं तु जीवेच्छरदां विशेषात् ॥ ॥ ४० ॥ मीनांत्यलग्ने खचरैश्चतुर्भिः केंद्रस्थितैर्नागशतं स जीवेत् ॥ निशाकरे लग्नगते स्वभागे मीनस्थिते वा यदि वा कुलीरे ॥ ४१ ॥ ग्रहैर्विहीने खचरैश्चतुर्भिः केंद्रस्थितैर्नागशतं स जीवेत्॥सिंहे विलग्ने खचरैश्चतुर्भिस्त्रिकोणगैर्जीवतितावदेव ॥४२॥

गुरु केन्द्रमें सूर्य लग्नमें मंगलसहित अथवा सूर्य मंगल अष्टममें होवें तो मनुष्य लक्ष्मी पायके गुणोंका अधिकारी होवै विशेषतः ८ सौ वर्षपर्यंत जीवै ॥ ४० ॥ लग्नमे मीन राशि अंत्यांश होवै और केंद्रमें चार ग्रह होवें तो सौ वर्ष बचे, चंद्रमा लग्नमें कर्कांशकी मीन वा कर्कका होवै ॥ ४१ ॥ उसके साथ कोई ग्रह न होवै और केन्द्रमें चार ग्रह होवें तो सौ वर्ष बचे, अथवा सिंहलग्नसे ४ ग्रह त्रिकोण ५।९ में होवैं तोभी वही फल होगा॥४२॥

त्रिभिर्ग्रहैः स्वोच्चगतैर्विलग्ने वृषे कुलीरे सगुरौ तथैव ॥ मृगे कुजे कर्किणि देवपूज्ये केंद्रेषु शेषाः परमायुरत्र ॥ ४३ ॥ भृगौ चतुर्थे सगुरौ विलग्ने सेन्दौ शनौ कर्मणि पापहीने ॥ जातो नरोस्मिन् समुपैति दीर्घमायुश्च विद्यां यशसा समेताम् ॥ ४४ ॥

लग्नमें वृष वा कर्क राशि गुरुसहित होवै और तीन ग्रह उच्चके हों अथवा मकरका मंगल कर्कका गुरु होवै अन्यग्रह केन्द्रोंमें होवैं तो यहां भी परमायु होती है ॥ ४३ ॥ शुक्र चतुर्थ होवै, लग्न गुरुसहित होवै और चंद्रमासहित शनि दशम भावमें पापरहित होवै ऐसे योगमें उत्पन्नभया मनुष्य विद्या तथा यशसहित दीर्घायु होताहै ॥ ४४ ॥

लग्ने मृगापरार्द्धे तु पूर्वार्द्धे भौमसंयुते ॥ लग्ने शशांकसहिते गुरौ केंद्रे परं वयः ॥ ४५ ॥ नृयुग्मपूर्वार्द्धगते भौमे लग्ने परार्द्धके ॥

चापपूर्वार्द्धगे जीवे लग्ने त्वपरभागगे ॥ ४६ ॥ सौरौ केन्द्रे भृगाः पुत्रे सचंद्रे त्वपरं वयः ॥ कन्यापूर्वार्द्धगे सौम्ये परार्द्धे लग्नमागते ॥ ४७ ॥ ग्रहैस्त्रिभिर्वा स्वोच्चस्थैः शतवर्षात्परं वयः ॥ पापास्त्रिषष्ठलाभस्थाः सौम्ये लग्नांत्यभागके ॥ ४८ ॥ लग्ने सौरौ गुरौ केंद्रे भृगौ वा त्वपरं वयः ॥ ४९ ॥

लग्न मकरका परार्द्ध १५ अंशसे ऊपर होवे उसीके पूर्वार्द्ध १५ अंशसे भीतर मंगल लग्नमे होवै और चंद्रमासहित गुरु केंद्रमें होवे तो परम आयु १२० वर्षकी होवे ॥ ४५ ॥ मंगल मिथुनलग्नके पूर्वार्द्धमे हो,लग्न मिथुनका उत्तरार्द्ध हो, यद्वा धनके पूर्वार्द्धमें गुरु उत्तरार्द्धमें लग्न होवे ॥ ४६ ॥ शनि केंद्रमें शुक्र चंद्रमासहित होवे तो परमायु होवे कन्याका उत्तरार्द्ध लग्न पूर्वार्द्धमें बुध होवे ॥ ४७ ॥ अथवा तीन ग्रह उच्चमें होवें तो सौसे अधिक आयु होवे पापग्रह ३ । ६ । ११ भावोंमें हों बुध लग्नके अंत्यभागमें हो ॥ ४८ ॥ लग्नमें शनि केंद्रमें गुरु अथवा शुक्र होवे तो परमायु भोगे ॥ ४९ ॥

नृयुग्मपूर्वार्द्धगते धरात्मजे लग्ने परार्द्धे सगुरौ विशेषात् ॥ केंद्रेच्छविद्भ्यां सहितेत्र जातः शतात्परं जीवति पुण्यभाक् च॥५०॥ अनिमिषपरमांशके विलग्ने शशितनये गवि पंचवर्गलिप्ते ॥ भवति हि परमायुषः प्रमाणं यदि सहिताः सकलाः स्वतुंगभेषु ॥ ५१ ॥

मिथुनके पूर्वार्द्धमें मंगल उत्तरार्द्धमें लग्न गुरुसहित होवे विशेषतः केन्द्रमें शुक्र बुध होवे तो मनुष्य सौवर्षसे ऊपर जीवै पुण्यवान् भी होवे ॥ ५० ॥ मीन मीनांशकलग्नमें हो वृषका चंद्रमा पांचवर्ग होरा द्रेष्काणादियोंमें अपने वर्गका हो अन्य सभीग्रह उच्चराशियोंमें होवें तब परमायु १२० का प्रमाण दशागणितसे होताहै ॥ ५१ ॥

अथाऽमितायुर्योगाः ।

गुरुशशिसहिते कुलीरलग्ने शशितनये भृगुजे च केंद्रयाते ॥ भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्यात् ॥ ५२ ॥

जिस योगमें आयु प्रमाणसेभी अधिक होजातीहै उसे कहतेहैं कि गुरु चंद्रमा सहित कर्कलग्न हो बुध शुक्र केंद्रमें हों अन्य ग्रह सूर्य मंगल शनि ३ । ६ । ११ । मेंसे किसीमें हों तो आयुप्रमाण जो केवल गणितके लिये १२० वर्ष कहाहै उससेभी अधिक आयु मिलेगी आयुका न्यूनाधिक करना मनुष्यके हातमें है यदि आचारवान् संयमी योगाभ्यासी पुण्यवान् भी रहे तो गणितागत आयुसेभी अधिक जी सकताहै यदि अनाचारी व्यभिचारी असंयमी दुष्टकर्मा पापी रहे तो गणितागत आयुको भी नही भोग सकता "परदारानोयुष्यन्त" यह श्रुति है कि परस्त्रीगमन करनेवाले पूरी आयु नहीं भोगते इत्यादि अनेक प्रमाण ग्रंथांतरोंमें है ॥ ५२ ॥

लग्ने घटे देवगुरौ झषस्थे व्यये भृगौ वासरपे विलग्ने ॥ जातः परं ब्रह्मपरं प्रयाति रसायनाद्यैर्दशवर्धितं तत् ॥ ५३ ॥ सिंहे विलग्ने सगुरौ भृगौ तु कुलीरगे सोमसुते धनस्थे ॥ पापग्रहैः षट्त्रिदशायगैश्च सहस्रवर्षं समुपैति जातः ॥ ५४ ॥

लग्न कुंभ बृहस्पति मीनका शुक्र व्ययभावमें और सूर्य लग्नमें होवे तो रसायनसेवन आदिसे गणितागत आयुसे दशगुणी आयु होतीहै ॥ ५३ ॥ सिंहलग्नमे बृहस्पति कर्कका शुक्र चंद्रमा धनस्थानमें और पापग्रह ६ । ३ । ११ में होवें तो मनुष्य एकहजार वर्ष जीवेगा ॥ ५४ ॥

दिनेशभौमौ हिबुके विलग्ने मंदान्विते भोगिपतौ व्ययस्थे ॥ शेषग्रहैर्मृत्युगृहोपपन्नैः सहस्रवर्षद्वयमत्र जातः ॥ ५५ ॥ अजे विलग्ने च रवौ सुखस्थे माने यमे भूमिसुते कलत्रे ॥ रिष्फे शशांके परिपूर्णवीर्ये रसायनाद्यैर्द्विसहस्रमायुः ॥ ५६ ॥ वृषे शशांके तनुगे विशेषात्समन्विते सौम्यसुरासुरेज्यैः ॥ जातस्तु देवेन्द्रपदं प्रयाति शेषग्रहैरर्थसमन्वितैर्वा ॥ ५७ ॥

सूर्य मगल चौथे शनि लग्नमें राहु व्ययभावमें हो शेष ग्रह अष्टमस्थानमें होवें तो मनुष्य दो सहस्रवर्ष जीवै ॥ ५५ ॥ मेष लग्न चौथा सूर्य दशम शनि सप्तम मंगल बारहवां चंद्रमा पूर्णबली होवै तो रसायन तथा आदिपदसे संयम योगाभ्यास सत्यव्रतादिसे दो हजारवर्ष आयु होवे ॥ ५६ ॥ चंद्रमा वृषका विशेषतः लग्नमें होवै बुध गुरु शुक्रसे युक्त होवै शेषग्रह धनभावमे होवै तो मनुष्य इंद्रपदको प्राप्त होवै ॥ ५७ ॥

जीवे विलग्ने स्वगृहं प्रपन्ने शून्ये नृयुग्मे भृगुजे च केन्द्रे ॥ रसायनाद्यैर्बहुवर्षजीवी जातस्तु देवेन्द्रपदं प्रयाति ॥ ५८ ॥एकर्क्षगैर्व्योमचरैरशेषैस्त्रिकोणगैः केंद्रचतुष्टयस्थैः ॥ जातः शिशुर्नश्यति जातमात्रो जीवेद्युगांतं यदि मंत्रसिद्ध्या ॥ ५९ ॥

बृहस्पति अपने घरका लग्न वा दशमभावमें हो तथा मिथुनका शुक्र केन्द्रमे होवै तो मनुष्य रसायनादिप्रयोगोंसे बहुत वर्ष बचे और इंद्रपदकोभी प्राप्त होताहै ॥ ५८ ॥ समस्त ग्रह एकही राशिमें केंद्र वा त्रिकोणमें होवें तो बालक जन्मतेही मरे, यदि मंत्रसिद्धिसे न मरे तो युगांतायु होवै ॥ ५९ ॥

त्रिकोणे पापनिर्मुक्ते केंद्रे सौम्यविवर्जिते॥निधने पापरहिते जातस्त्वमरसन्निभः ॥ ६० ॥ लग्ने वृषे शुक्रयुते गुरौ तु केन्द्रान्विते

पट्त्रिदशायसंस्थैः ॥रसायनाद्यैरिह मंत्रसिद्ध्या जातस्तु देवेन्द्रपदं प्रयाति ॥ ६१ ॥ शनौ तुलायां मकरे गुरौ च लग्ने कुलीरे वृषभे शशांके ॥ जातः सुखी ब्रह्मपदं प्रयाति प्रसाधनाद्यैरिह मंत्रसिद्ध्या ॥ ६२ ॥

त्रिकोण ५ । ९ में पापग्रह न हों केंद्रोंमें शुभग्रह न हों अष्टम भावमेंभी पापग्रह न होवे तो मनुष्य देवताके तुल्य होगा ॥ ६० ॥ वृषलग्नमें शुक्र हो गुरु केन्द्रमें तथा अन्यग्रह ६ । ३ । १० । ११ भावोंमें होवे तो मनुष्य रसायनादिसे अथवा मंत्रसिद्धिसे इन्द्रपदको प्राप्त होवे ॥ ६१ ॥ शनि तुलाका गुरु मकरका चंद्रमा वृषका और लग्न कर्कट होवै तो मनुष्य योगादिसाधन एवं मंत्रसिद्धिसे ब्रह्मपदको प्राप्त होताहै ॥ ६२ ॥

वर्गोत्तमे लग्नगते कुलीरे केन्द्रे गुरौ भूमिसुते कलत्रे ॥ सिंहासनांशे भृगुजे विशेषाद्रसायनाद्यैरमितायुरेति ॥ ६३ ॥ कन्यांत्यलग्ने सबुधे कलत्रे जीवे यदा गोपुरभाग्ययुक्ते ॥ मृद्वंशके वा दिननाथपुत्रे जातस्त्वसंख्यायुरुपैति सूनुः ॥ ६४ ॥

लग्न कर्क कर्कांशक होवे गुरु केन्द्रमे मंगल सप्तममें होवै विशेषकरिके शुक्र सिंहासनांशकमें होवै तो रसायन आदिसे अमित आयु होतीहै ॥ ६३ ॥ कन्यालग्न ( अंत्यांशक ) वर्गोत्तममें बुध होवै सप्तम गुरु गोपुरांशकमें अथवा शनि मृद्वंशकमें होवै तो मनुष्य असंख्य आयु भोगताहै ॥ ६४ ॥

देवलोकांशगे शुक्रे केन्द्रस्थे धरणीसुते ॥ सिंहासनांशके जीवे केन्द्रे जातस्त्वसंख्यकः ॥ ६५ ॥ उत्तमांशे बुधे केन्द्रे शुक्रे पारावतांशके ॥ स्वर्गलोके गुरौ केन्द्रे त्वौषधाद्यैरसंख्यकः ॥६६॥ गोपुरेशे भृगौ केन्द्रे गुरौ पारावतांशके॥त्रिकोणे कर्किलग्ने तु युगांतं सतु जीवति ॥ ६७ ॥

शुक्र देवलोकांशकमें मंगल केन्द्रमें गुरु सिंहासनांशमें केन्द्रगत होवै तो असंख्य आयु होवै ॥ ६५ ॥ उत्तमांशगत बुध केन्द्रमें हो शुक्र पारावतांशकमें हो गुरु स्वर्गलोकांशकमें होवै तो रसायन औषधादिसे असंख्यायु होवै ॥ ६६ ॥ शुक्र गोपुरांशगत केन्द्रमें होवै गुरु पारावतांशकमें त्रिकोणगत हो लग्न कर्क होवै तो युगांत आयु होवै ॥ ६७ ॥

चापांशे कर्किलग्ने च तस्मिन्देवेन्द्रपूजिते ॥ त्रिचतुर्भिर्ग्रहैः केन्द्रे जातो ब्रह्मपदं लभेत् ॥६८॥ तृतीयैकादशे शुक्रे गोपुराद्यंशकान्विते ॥ वृषे वर्गोत्तमे लग्ने ब्रह्मणः परमं पदम् ॥ ६९ ॥ लग्ने

शुक्रे गुरौ कामे कन्यायामुडुनायके ॥ चापे मेषांशके लग्ने जातो याति परं पदम् ॥ ७० ॥ पंचमे बुधसंयुक्ते गोपुराद्यंशकान्विते ॥ गुरौ घटे विलग्नेऽस्मिन् जातो ब्रह्मपदं लभेत् ॥ ७१ ॥

कर्कलग्नमें धनुरंशक हो तहां गुरु बैठाहो और ३ । ४ ग्रह केंद्रमें होवैं तो मनुष्य ब्रह्मपद पावै ॥ ६८ ॥ तीसरा वा ग्यारहवां शुक्र गोपुरादि शुभांशकमें होवै वर्गोत्तम वृषलग्न होवै तो मनुष्य ब्रह्मके परमपदको प्राप्त होवै ॥ ६९ ॥ लग्नमें शुक्र गुरु सप्तम कन्यामें चंद्रमा हो धन लग्नमें मेषांशका होवै तो मनुष्य परमपदको प्राप्त होवै ॥ ७० ॥ पंचम बुध गोपुरादि अंशकमें होवै गुरु कुंभका लग्नमें होवै तो मनुष्य ब्रह्मपदको प्राप्त होवै ॥ ७१ ॥

केन्द्रे गुरौ लाभगतेऽर्कपुत्रे धने रवौ मांदियुते कलत्रे॥भाग्ये धरासूनुयुतेत्र जातो युगांतकालं समुपैति मंत्रैः ॥ ७२ ॥ त्रिकोणगौ जीवबुधौ विशेषाल्लग्ने वृषे तत्र युते धराजे ॥ निशाकरे गोपुरभागयुक्ते जातः सहस्रद्वयवर्षमेति ॥ ७३ ॥ पक्षे सिते जन्म यदाह्निकाले केन्द्रे गुरौ वा शशिभे विलग्ने ॥ दारे कुजे भानुसुते सुखस्थे जातस्तु जीवेदयुताब्दसंख्यम् ॥ ७४ ॥

गुरु केन्द्रमे शनि लाभस्थानमे सूर्य धनस्थानमें केतु सप्तममें मंगल नवमस्थानमें होवै तो मंत्रबलसे युगांत पर्यंत आयु होवै ॥ ७२ ॥ गुरु बुध त्रिकोणमे होवैं वृषलग्न हो उसमें मगल होवै और चंद्रमा गोपुरांशमें होवै तो दो सहस्रवर्षकी आयु होवै ॥ ७३ ॥ शुक्लपक्षमें दिनका जन्म हो गुरु केन्द्रमें अथवा कर्कका लग्नमें होवै सप्तम मंगल चौथा सूर्य होवै तो दसहजार वर्ष बचे ॥ ७४ ॥

जीवमंदारशुक्राणामन्योन्यं केन्द्रसंभवे ॥ त्रिकोणे वा यदा याते जातस्त्वयुतवत्सरः ॥ ७५ ॥ शुभैर्युक्ते चतुष्केंद्रे पापैः षट्त्रिभवान्वितैः ॥ सिंहे लग्ने यदा जातो जीवेत्षडयुतानि सः ॥ ७६ ॥

गुरु शनि शुक्रका अन्योन्य केन्द्रस्थिति संबंध होवै अथवा त्रिकोणमें होवै तो एक अयुतवर्ष जीवै ॥ ७५ ॥ चारों केद्रोंमे शुभग्रह होवैं पापग्रह ६ । ३ । ११ भावोंमें हों लग्न सिंह होवै तो छ अयुतवर्ष आयु होवै ॥ ७६ ॥

## अथ मुनियोगः ।

कर्क्यादिस्थैर्ग्रहैः सर्वैर्गुरुचंद्रादिभिर्यदा ॥ शून्यं तैः परमोच्चस्थैर्मुनितुल्यो भवेन्नरः ॥ ७७ ॥ शन्यादिभौमपर्यंते लग्नादौ खेचराः शुभाः ॥ वैशेषिकांशकयुता जातास्त्वमरसन्निभाः ॥ ७८ ॥

कर्कसे मकरपर्यंत सभी ग्रह गुरु चंद्रादि होवें इस बीच जिनके उच्च हैं वे उच्चराशियोंमें होवें तो मनुष्य मुनितुल्य होवै ॥ ७७ ॥ लग्नसे लेकर क्रमसे शनि सूर्य चंद्रमा मंगल होवें वैशेषिकांशकोंमें भी होवें तो मनुष्य देवताओंके तुल्य होवै ॥ ७८ ॥

आकल्पं जीवति नरो मृगे लग्ने कुजादिकाः ॥ रव्यन्ताः खेचराः सर्वे सोत्थे जीवेह्नि जन्मनि ॥ ७९ ॥ मेषांत्यलग्ने सगुरौ भृगौ वा निशाकरे गोधनुमध्यमांशे ॥ सिंहासनांशे यदि वा धराजे जातस्त्वसंख्याब्दमुपैति मंत्रैः ॥ ८० ॥ स्थिरे रवौ सोमसुतेन युक्ते चंद्रे वृषस्थे मिथुने च शुक्रे ॥ गुरौ कुलीरे यदि वा विलग्ने शनौ तुलायां मुनिसाम्यमेति ॥ ८१ ॥

मंगलसे लेकर सूर्यपर्यंत ग्रह मकर लग्नमें होवें तीसरे बृहस्पति और दिनका जन्म होवै तो मनुष्य कल्पपर्यंत बचता है ॥ ७९ ॥ मेषके अंत्यांश लग्नमें गुरु अथवा शुक्र होवें चंद्रमा वृषके वा धनके मध्यमांशमें होवै अथवा मंगल सिंहासनांशमें होवै तो मनुष्य मंत्रबलसे असंख्य वर्षपर्यंत बचताहै ॥ ८० ॥ सूर्य बुधसहित स्थिरराशिमें चंद्रमा वृषका शुक्र मिथुनका गुरु कर्कटका लग्नमें शनि तुलाका होवें तो मुनितुल्य होवै ॥ ८१ ॥

देवलोकांशके चंद्रे भौमे पारावतांशके ॥ सिंहासने रवौ लग्ने जातो मुनिसमो भवेत् ॥ ८२ ॥ मेषलग्ने रवौ माने जीवे स्वोच्चसमन्विते ॥ त्रिषडायगते पापे जातो मुनिसमो भवेत् ॥ ८३ ॥ चिंतामणौ मया प्रोक्तं संख्यायुश्च मनीषिणाम् ॥ यदुक्तं पूर्वकैः सर्वं तत्तदेव मयाधुना ॥ ८४ ॥

इति श्रीसर्वार्थचिंतामणावायुस्संख्यानिरूपणो नाम द्वादशोऽध्यायः ॥ १२ ॥

चंद्रमा देवलोकांशकमें मंगल पारावतांशमें सूर्यसिंहासनांशमें लग्नगत होवै तो मनुष्य मुनि तुल्य होवै ॥ ८२ ॥ मेष लग्न सूर्य दशम बृहस्पति उच्चका और ३ । ६ । ११ भावोंमें पापग्रह होवें तो मनुष्य मुनितुल्य होवै ॥ ८३ ॥ जो यहां आयुसंख्या कहीहै यह विद्वानोंके तुष्टयर्थ जो पूर्वाचार्योंने कही है वही समस्त मैंनें यहां कहीहै ॥ ८४ ॥

इति श्रीसर्वार्थचिंतामणौ माहीधरभाषाटीकायामायुस्संख्यानिरूपणाध्यायो द्वादशः ॥ १२ ॥

# त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ दीप्ताद्यवस्थाफलविचाराध्यायः।

दशानुरोधेन फलं वदंति मुनीश्वरा जातशुभाशुभं तत् ॥ सारं समुद्धृत्य तदेव वक्ष्ये भेदं यथा विस्तरतो दशानाम् ॥ १ ॥ दीप्तः स्वस्थस्तु मुदितः शांतो हीनोतिदुःखितः ॥ विकलश्च खलः कोपी नवधा खेचरो भवेत् ॥ २ ॥ उच्चस्थः खेचरो दीप्तः स्वस्थः स्वक्षेत्रमित्रभे ॥ मुदितो मित्रभे शांतस्त्वपरो हीन उच्यते ॥ ३ ॥ शत्रुभे दुःखसंयुक्तो विकलः पापसंयुतः ॥ खलः पराजितो ज्ञेयः कोपी स्यादर्कसंयुतः ॥ ४ ॥ पृथक्पृथक् फलं तेषां दशाकालविशेषतः ॥ तत्र नामानुरोधेन परिपाके वदंति हि ॥ ५ ॥

अब दशाफलके लिये दीप्तादि अवस्था कहतेहैं कि मुनीश्वर दशाके अनुरोधसे शुभाशुभ फल कहतेहैं उनमें सार लेकर विस्तारसे यहां वही विचार कहताहूं ॥ १ ॥ दीप्त १, स्वस्थ २, मुदित ३, शांत ४, हीन ५, अतिदुःखित ६, विकल ७, खल ८, कोपी ९, ऐसे नौ प्रकार यह होते हैं ॥ २ ॥ अब इनके लक्षण कहते हैं ॥ उच्चस्थित ग्रह दीप्त १, अपनी राशिमें स्वस्थ २, मुदित ३, शुभराशिगत शुभयुत शांत ४, नीच राशिमें हीन ५, ॥ ३ ॥ शत्रुराशिमें दुःखी ६, पापयुक्त विकल ७, युद्धमें पराजित खल ८, सूर्ययुक्त अस्तंगत कोपी ९ ॥ ४ ॥ इनके पृथक् फल विशेषकरके दशासमयमें नामके गुणानुसार परिणाममें कहते है ॥ ५ ॥

पाके प्रदीप्तस्य धराधिपत्यमुत्साहशौर्यं धनवाहनं च ॥ स्त्रीपुत्रलाभं सुखबंधुपूजे क्षितीश्वरान्मानमुपैति विद्याम् ॥ ६ ॥ स्वस्थस्य खेटस्य दशाविपाके स्वास्थ्यं नृपाल्लब्धधनादिसौख्यम् ॥ विद्यायशःप्रीतिमहत्त्वतां च दारार्थभूम्यात्मजधर्ममेति ॥ ७ ॥ मुदान्वितस्यापि दशाविपाके वस्त्रादिभूगंधसुतार्थधैर्यम् ॥ पुराणधर्मश्रवणादिगानदानादियानांबरभूषणाप्तिम् ॥ ८ ॥

दीप्तादियोंके पृथक् फल कहतेहैं प्रदीप्त ग्रहके दशामें राजत्व, उत्साह, शौर्य ( वीरता ), धन, वाहन, स्त्रीपुत्र लाभ, सुख, बंधु वर्गमें सन्मान, विद्या और राजासे सन्मान मिलतेहैं

॥ ६ ॥ स्वस्थ ग्रहकी दशामें आराम मिले, राजासे मिले धनादिका सुख, विद्या, यश, प्रसन्नता, बढप्पन, स्त्री, धन, भूमि, पुत्र और धर्म मिलतेहैं ॥ ७ ॥ मुदितावस्थावाले ग्रहकी दशामें वस्त्रादि, भूमि, सुगंधि वस्तु, पुत्र, धन, धैर्य, पुराणधर्म सुनना आदि, गायन, दान, सवारी, वस्त्र, भूषणादि मिलतेहैं ॥ ८ ॥

दशाविपाके सुखधैर्यमेति शांतस्य भूपुत्रकलत्रयानम् ॥ विद्याविनोदान्वितधर्मशास्त्रं बह्वर्थदेशाधिपपूज्यतां च ॥ ९ ॥ स्थानच्युतिं बंधुविरोधितां च हीनस्य खेटस्य दशाविपाके॥ जीवत्यसौ कुत्सितहीनवृत्त्या त्यक्तो जनै रोगनिपीडितः स्यात् ॥ १० ॥ दुःखान्वितस्यापि दशाविपाके नानाविधं दुःखमुपैति नित्यम् ॥ विदेशगो बंधुजनैर्विहीनश्चौरादिभूपैर्भयमाभिशस्तः ॥ ११ ॥

शांत ग्रहकी दशामें सुख, धैर्य, भूमि, पुत्र, स्त्री, वाहन, विद्या, चर्चायुक्त, धर्मशास्त्रबोध, बहुत प्रकार प्रयोजनसिद्धि, और राजासे पूज्यता मिलती है ॥ ९ ॥ हीनग्रहकी दशामे स्थानहानि, बंधुविरोध होतें है तथा निंद्य और हीन वृत्तिसे आजीवन मिलताहै अपने मनुष्योंसे त्यक्त और रोगपीडित रहताहै ॥ १० ॥ दुःखयुक्तकी दशामें अनेक प्रकारके दुःख नित्य मिलते हैं विदेशगमन बंधुजनसे हीन नर रहे चौर आदि वा राजासे भय एवं अपवाद पावै ॥ ११ ॥

वैकल्यखेटस्य दशाविपाके वैकल्यमायाति मनोविकारम् ॥ पित्रादिकानां मरणं विशेषात्स्त्रीपुत्रयानांबरचोरपीडाम् ॥ १२ ॥ दशाविपाके कलहं वियोगं खलस्य खेटस्य पितुर्वियोगम् ॥ शत्रुं जनानां धनभूमिनाशमुपैति नित्यं स्वजनैश्च निंदाम्॥ १३॥ कोपान्वितस्यापि दशाविपाके पापं समायाति बहुप्रकारैः ॥ विद्यायशःस्त्रीधनभूमिनाशं राज्ञां च वित्तं हरतेऽत्र योगी ॥ १४ ॥

विकल ग्रहकी दशामें विकलता मनमें विकार पिता आदियोंका मरण स्त्री पुत्र वाहन हानि चोरसे पीडा मिले ॥ १२ ॥ खलग्रहकी दशामें कलह, अपने मनुष्योंका वियोग पिताका वियोग अनेक शत्रु, धन भूमिका नाश और अपने मनुष्योंसे निन्दा मिले ॥ १३ ॥ कोपयुक्तकी दशामें बहुत प्रकारसे पाप आताहै विद्या यश स्त्री धन भूमिका नाश राजासे वित्तहरण यद्वा राजाओंकाभी धन योगी हरण करे ॥ १४ ॥ इति दीप्तादिग्रहफलविचार: ॥

अथ दशाफलानि ।

भानोर्दशायां परमोच्चगस्य भूम्यर्थदारात्मजकीर्तिशौर्य्यम् ॥ संमाननं भूमिपतेः सकाशादुपैति संचारविनोदगोष्ठीम् ॥ १ ॥ उच्चान्वितस्यापि रवेर्दशायां गोवृद्धिधान्यार्थपरिभ्रमं च ॥ संचारयुग्बंधुजनैर्विरोधं देशाद्विदेशं चरति प्रकोपात् ॥ २ ॥ प्रचण्डवेश्यागमनं क्षितीशादुपैति वृत्तिं रतिकेलिमानम् ॥ मृदंगभेरीरवयुक्तयानमन्योन्यवैरं लभते मनुष्यः ॥ ३ ॥ आरोहिणी वासरनायकस्य दशा महत्त्वं कुरुतेतिसौख्यम् ॥ परोपकारं सुतदारभूमिगोवाजिमातंगकृषिक्रियादीन् ॥ ४ ॥

उच्चराशिके परमांश १० अंशपर सूर्य होवै तो उसकी दशामें भूमि, धन, स्त्री, कीर्ति, शौर्य राजासे सन्मान और टहलने घूमने आदि शुभ संचार ( सगल ) मंत्रणाकी गोष्ठी (सभा) प्रवेश इतने मिलतेहैं ॥ १ ॥ केवल उच्चराशिमात्रमें होवै तो उसकी दशामें गौकी वृद्धि अन्नधन भ्रम गमागमादि होवै इधर उधर फिरना पडे बंधु जनोंसे विरोध होवै कोपसे एकदेशसे दूसरे देशको चला जाताहै ॥ २ ॥ दुष्ट वेश्याका गमन होवै राजासे आजीवन मिले कामक्रीडा तथा मान मिले, मृदंग तुरही आदि बाजे जिसके आगे बजते हों ऐसी सवारी मिले आपुसमें परस्पर वैरभी मनुष्य पाताहै ॥ ३ ॥ यदि सूर्य ( आरोही ) उच्चमें चढ़रहा होवै तो उसकी दशामें बडप्पन मिलताहै सुख बहुत करताहै दूसरेका उपकार होताहै पुत्र स्त्री भूमि गौ घोडा हाती और कृषि कर्म [illegible] ४ ॥

दशावरोहादिननायकस्य कृषिक्रिया वित्तगृहेष्टनाशम् ॥ चोराग्निपीडां कलहं विरोधं नरेशकोपं कुरुते विदेशम् ॥ ५ ॥ नीचस्थितस्यापि रवेर्विपाके मानार्थनाशं क्षितिपालकोपात् ॥ स्वबंधुनाशं सुतामित्रदारैः पित्रादिकानामपकीर्तिमेति ॥ ६ ॥ अत्यंतनीचान्वितसूर्यदाये विपत्तिमाप्नोति गृहच्युतिं च ॥ विदेशयानं मरणं गुरूणां स्त्रीपुत्रगोभूमिकृपेर्विनाशम् ॥ ७ ॥

सूर्यकी दशा ( अवरोही ) उच्चसे उतरकर नीचमें जानेवालीमें कृषिकर्म अन्न, धन, घर, प्रियवस्तुका नाश करतीह चोरकी अग्निकी पीडा कलह बैर राजकोप और विदेशगमन करतीहै ॥ ५ ॥ नीच राशिगत सूर्यकी दशामें राजकोपसे मान एवं धनका न [illegible] बंधु-

का नाश, पुत्र, मित्र, स्त्रीसे हानि, पिता आदियोंकी अपकीर्ति पाताहै ॥ ६ ॥ अत्यंत नीच तुलाके १० अंश पर स्थित सूर्यकी दशामें विपत्ति पाताहै घरबार छूट जाताहै विदेश गमन पिताआदि गुरुजनोंका मरण और स्त्री, पुत्र, गौ, भूमि, कृषिका नाश होताहै ॥ ७ ॥

मूलत्रिकोणस्थरवेर्विपाके क्षेत्रार्थदारात्मजबंधुसौख्यम् ॥ राजाश्रयं गोधनमित्रलाभं स्वस्थानयानादिकमेति राज्यम् ॥ ८ ॥ स्वक्षेत्रगस्यापि रवेर्दशायां स्वबंधुसौख्यं कृषिवित्तकीर्तिम् ॥ विद्यायशःप्रार्थितराजपूजां स्वभूमिलाभं समुपैति विद्याम् ॥ ९ ॥

अपने मूलत्रिकोणमें स्थित सूर्यकी दशामें खेती, धन स्त्री, पुत्र, बंधुसे सुख राजाके आश्रय गौ, धन, मित्र, अपनास्थान वाहनादि और स्वकुलानुमान राज्य पाताहै ॥ ८ ॥ अपने क्षेत्रगत सूर्यकी दशामें अपने बंधुजनोंसे सौख्य कृषि, धन, कीर्ति, विद्या, यश, मांगी हुई राजासे पूजा अपनी भूमि एवं विद्याको पाताहै ॥ ९ ॥

दशाविपाके ह्यधिशत्रुगस्य रवेः प्रनष्टार्थकलत्रपुत्रः ॥ गोमित्रपित्रादिशरीरकष्टं शत्रुत्वमायाति जनैः समंतात् ॥ १० ॥ सपत्नराशिस्थितसूर्यदाये दुःखी परिभ्रष्टसुतार्थदारः ॥ नृपाग्निचौरैर्विपदं विवादं पित्रोर्विरोधं च दशांतमेति ॥ ११ ॥

अधिशत्रु राशिगत सूर्यकी दशामें धन, स्त्री, पुत्र नष्ट होवै गौ, मित्र, पिता आदिके शरीरमें कष्ट होवै सभी ओरसे मनुष्योंके साथ शत्रुता होवै ॥ १० ॥ शत्रु राशिगत सूर्यकी दशामें दुःखी रहे पुत्र, धन, स्त्री नष्ट होवैं राजा, [illegible] विवाद होवै इस दशामें माता पितासे विरोध पावै ॥ ११ ॥

स्वमित्रराशिस्थितसूर्यदाये स्वभृत्यपित्रात्मजराजपूजाम् ॥ स्वगेहवासं स्वजनस्य संगं यानादिभूषांबरताम्रलाभम् ॥ १२ ॥ अत्यंतमित्रर्क्षगतस्य भानोर्दशाविपाके ह्यतिसौख्यमेति ॥ स्त्रीपुत्रधान्यार्थमनोविलासरथादियानांबरभूषणानि ॥ १३ ॥

मित्रराशिगत सूर्यदशा [illegible] पिता पुत्र राजासे सम्मान पूजा मिले अपने घरमें [illegible] का संग [illegible] दि तथा भूष[illegible] तांबेका लाभ होवै ॥ १२ ॥ [illegible] सूर्यकी द[illegible] स्त्री [illegible] धन, मनका विलास रथ आदि स[illegible] मिले

समक्षगस्यापि रवेर्दशायां समंजनैः स्यात्कृषिभूमिधान्यम् ॥
गोवाजियानांबरदेहसौख्यं स्त्रीपुत्रदोषं रणपीडितः स्यात् ॥१४॥
नीचान्वितस्यापि रवेर्दशायां नीचानुवृत्त्या कुनखी कुशीलः ॥
स्त्रीपुत्रधान्यार्थपशुक्रियादिमनोविकारं समुपैति हेयम् ॥ १५ ॥
उच्चान्वितस्यापि रवेर्दशायां मनोभिलापं लभते स्ववृत्त्या ॥
तीर्थाभिषेकं हरिकीर्तनं च प्राकारकूपादिपुराणशास्त्रम् ॥ १६ ॥

सम ग्रहके राशिगत सूर्यकी दशामें मनुष्योंके साथ समता रहे कृषि, भूमि, अन्न, गौ, घोडे, सवारी, वस्त्र मिलें शरीर सुख मिले स्त्रीपुत्रोंको दोष उत्पन्न होवै रणसे पीडित रहे ॥ १४ ॥ नीचगत ग्रहसे युक्त सूर्यकी दशामें नीचवृत्तिसे आजीवन होवै कुनखी होवै दुष्टस्वभाव रहे स्त्री, पुत्र, अन्न, धन पशुक्रिया आदिमें मनोविकार रहे इनका त्याग होवै ॥ १५ ॥ उच्चगत ग्रह-युक्त सूर्यकी दशामें अपनी वृत्तिसे मनोभिलाष पावै तीर्थस्नान मिले हरिका कीर्त्तनभी होवै परिखा कूप आदिका बनाना पुराण शास्त्रकी चर्चा मिलै ॥ १६ ॥

पापान्वितस्य द्युमणेर्दशायां नित्यं मनः क्लिश्यति देयबुद्ध्या ॥
कुभोजनं कुत्सितवस्त्रपाने कुशीलवृत्त्या त्वधनं कृशत्वम्॥१७॥
दिनाधिनाथस्य शुभान्वितस्य पाके सुखं भूमिधनादिवस्त्रम् ॥
इष्टैर्विलासं स्वजनैः समाजं कल्याणवाग्जालविनोदगोष्ठीम्॥१८॥

पापयुक्त सूर्यकी दशामे बहुत व्ययकी बुद्धि यद्वा त्यागबुद्धीसे सर्वदा मनमें क्लेश रहै कुभो-जन कदन्न आदि कुवस्त्र आदि निषिद्धपान मिलें दुष्टशील दुष्टवृत्तिसे निर्धनता और कृशत्व होवै ॥ १७ ॥ शुभयुक्त सूर्यकी दशामें सुख मिले भूमि धन वस्त्रादि मिलें मनोनुकूल मनुष्योंसे *विलास अपने मनुष्योंका समाज मंगल वाणीवाणीके जालके विनोद और सम्पत्व मिले॥ १८॥*

करोति भानुः शुभवीक्षितश्चेद्विद्यायशःस्त्रीसुतवाग्विलासम् ॥
कांतिप्रतापं रतिकेलिसौख्यं पित्रोः सुखं भूपतिमाननं च ॥१९॥
पापेक्षितस्यापि सहस्रभानोर्दशाविपाके परमं तु दुःखम् ॥ पित्रो-
र्विनाशं सुतदारकष्टं चौराग्निभूपालकृतं कृशत्वम् ॥ २० ॥

शुभ ग्रहदृष्ट सूर्यकी दशामें विद्या, यश, स्त्री, पुत्र मिले बातचीतमें विलास होवे कांतिबढे प्रताप बढे कामक्रीडाका सुख मिले ॥ १९ ॥ पापदृष्ट सूर्यकी दशामें परमदुःख मिले मातापिताका विनाश स्त्री पुत्र कष्ट चोरसे अग्निसे भय राजासे भय मिले और शरीरमें कृशता आवै॥२०॥

गरोगततो दुःशीलत्वं प्रभग्नसंसारः ॥ २९ ॥ आदौ गुरुदशाकाले नृपपूजां महत्सुखम् ॥ मध्ये स्त्रीपुत्रलाभादि चांते कष्टं विनिर्दिशेत् ॥ ३० ॥ धनस्थितस्यापि गुरोर्विपाके धनायतिं भूपतिमाननं च ॥ विद्याविवादांकितराजगोष्ठीं सर्वोपकारं विजयं सुखं च ॥ ३१ ॥

नीचांशगत गुरुकी दशामें राजासे भय गुल्म अरुचि आदि रोग होवैं, स्थान छूट जावै, बंधुजनोंमें विरोध होवै, राजा अग्नि चोर और अपने कुलवालोंसे भी भय होवै ॥२८॥ अस्तंगत गुरुकी दशामें एकाएकी ज्वरसे पीडित तथा क्षीण होजावै, ऊपरके अंगमें रोग होनेसे संतप्त रहे, शील नष्ट होजावै, सारा संसार निरर्थक मालूम पडे ॥ २९ ॥ गुरुकी दशामें पहिले तो राजपूज्यता तथा सुख मिलता है बीचमें पुत्रादिलाभ और अंतमें कष्टफल कहना ॥ ३० ॥ दूसरे भावगत गुरुकी दशामें धनकी वृद्धि राजासे मान विद्याकी चर्चावाली राजसभामें प्रवेश अपनेसे सबका उपकार विजय और सुख इतने फल होते हैं ॥ ३१ ॥

नृपकृतबहुमानं भ्रातृभिर्भूमिलाभं परयुतविजनैर्वा दत्तगोभूमिवित्तम् ॥ अशनवसनभूषागंधमाल्यांबराणि परकृतमुपकारं विज्ञतामेति शौर्य्यम् ॥ ३२ ॥ तृतीयस्थगुरोर्दाये भ्रातॄणां च सुखं भवेत् ॥ नृपदत्तं धनं सौख्यं गंधमाल्यांबरादिकम् ॥ ३३ ॥ नीरोगता पुत्रकलत्रलाभं लग्नाद्रिपुस्थस्य गुरोर्दशायाम् ॥ आदौ भवेदेवमथांत्यपाके दारार्थचौरादिभयं सरोगम् ॥ ३४ ॥ जीवो मरणपदस्थः करोति सौख्यं स्वबंधुजनहानिम् ॥ स्थानच्युतिं विदेशं प्रांते स्त्रीराजपुत्रसन्मानम् ॥ ३५ ॥

धनस्थानगत गुरुकी दशाका फल औरभी कहतेहैं कि राजाका किया बहुत मान, भाइयोंसे भूमिका लाभ, शत्रुसे वा अन्य किसी मनुष्योंके दिये गौ भूमि धन मिलें, भोजन, वस्त्र, भूषण, चंदन, पुष्प, उत्तमवस्त्र मिलें, दूसरेसे अपना उपकार उत्तम बुद्धिमत्त्व और सामर्थ्य मिलें ॥ ३२ ॥ तीसरे गुरुकी दशामें भाईयोंका सुख राजाका दिया धन सुख और चंदन सुगंधित पुष्प वस्त्रादि मिलते हैं ॥ ३३ ॥ छठे गुरुकी दशामें प्रथम निरोगता पुत्र स्त्री लाभ अंतमें स्त्री धनहानि चोर आदिकी भय होतीहै ॥ ३४ ॥ अष्टमस्थ गुरुकी दशा सुख तथा अपने बंधुजनोंकी हानि करतीहै स्थानहानि विदेशगमन कराती है अंतमें स्त्री राजसन्मान पुत्रादिलाभ यद्वा राजपुत्रसे सन्मान दिलातीहै ॥ ३५ ॥

लाभगजीवदशायां संप्राप्तौ राज्यलाभमुपयाति ॥ बह्वर्थदारपुत्रान् भूपविरोधं स्वबंधुविद्वेषम् ॥ ३६ ॥ व्ययगतजीवदशायां प्राप्तौ वाहनादि समुपयाति ॥ लभते विदेशयानं नानाक्लेशैश्च परिभूतः ॥ ३७ ॥

ग्यारहवें गुरुकी दशामें राज्यलाभको प्राप्त होताहै धन स्त्री पुत्र बहुत होतेहैं, राजा तथा अपने बंधुजनोंमें द्वेष होताहै ॥३६॥ बारहवें गुरुकी दशामें वाहन आदि मिलतेहैं तथा अनेक प्रकारके क्लेशोंसे दबकर विदेशगमन मिलताहै ॥ ३७ ॥

पाके स्थानबलान्वितस्य च गुरोः क्षेत्रार्थदारात्मजान्संप्राप्नोति गजांश्च वस्त्रकनकं चित्रांबरं भूषणम् ॥ दिग्वीर्यान्वितदेवनायकगुरौ लोके प्रसिद्धिं तथा जीवे कालबलाधिके नृपवधूसन्मानतां याति सः ॥ ३८ ॥ निसर्गवीर्यान्वितजीवदाये निसर्गतश्चातिसुखं महत्त्वम् ॥ विद्याविलासं रतिकेलिसौख्यं भागीरथीतोयकृताभिषेकम् ॥ ३९ ॥ वक्रं गतस्यापि गुरोर्दशायां महार्थतां याति सुतार्थदारान् ॥ युद्धे जयं भूपतिमित्रतां च सुगंधजातांवरवाग्विलासम् ॥ ४० ॥

स्थानबली गुरुकी दशामे खेती, धन, स्त्री, पुत्र मिलतेहैं हाथी, घोडे, वस्त्र, सुवर्ण, अनेक रगके वस्त्रे भूषणोंका लाभ होताहै दिग्वीर्ययुक्त गुरुकी दशामें लोकमें ख्याति, कालबलयुत गुरुकी दशामें राजरानियोंसे सन्मानताको प्राप्त होताहै ॥ ३८ ॥ निसर्गबलयुत गुरुकी दशामें सुख बडप्पन विद्याका विलास कामक्रीडाका सुख और गंगाका स्नान मिलताहै ॥ ३९ ॥ वक्रगति गुरुकी दशामें धनसंपन्नता स्त्री पुत्र धनलाभ संग्राममे विजय राजासे मित्रता सुगंध द्रव्य उत्तम वस्त्र और वाणीका विलास मिलतेहैं ॥ ४० ॥

दृग्वीर्ययुक्तस्य गुरोर्विपाके कृपाकटाक्षेण महीपतीनाम् ॥ समस्तभाग्यं समुपैति नित्यं देशान्तरे भ्राम्यति किंचिदेव॥४१॥ क्रूरषष्ट्यंशसंयुक्तगुरोर्दायेतिकष्टताम् ॥ राजकोपावमानादीन् लभते नात्र संशयः ॥ ४२ ॥

दृग्बली गुरुकी दशामें राजाओंकी कृपासे संपूर्ण ऐश्वर्य नित्य पावै तथा थोडा, देशांतर भ्रमणभी करे ॥ ४१ ॥ क्रूरषष्ट्यंशयुक्त गुरुकी दशामें अतिकष्ट राजाका कोप अपमान आदि निस्संदेह पाताहै ॥ ४२ ॥

गरोगततो दुःशीलत्वं प्रभग्नसंसारः ॥ २९ ॥ आदौ गुरुदशाकाले नृपपूजां महत्सुखम् ॥ मध्ये स्त्रीपुत्रलाभादि चांते कष्टं विनिर्दिशेत् ॥ ३० ॥ धनस्थितस्यापि गुरोर्विपाके धनायतिं भूपतिमाननं च ॥ विद्याविवादांकितराजगोष्ठीं सर्वोपकारं विजयं सुखं च ॥ ३१ ॥

नीचांशगत गुरुकी दशामें राजासे भय गुल्म अरुचि आदि रोग होवैं, स्थान छूट जावै, बंधुजनोंमें विरोध होवै, राजा अग्नि चोर और अपने कुलवालोंसे भी भय होवै ॥२८॥ अस्तगत गुरुकी दशामें एकाएकी ज्वरसे पीडित तथा क्षीण होजावै, ऊपरके अंगमें रोग होनेसे संतप्त रहे, शील नष्ट होजावै, सारा संसार निरर्थक मालूम पडे ॥ २९ ॥ गुरुकी दशामें पहिले तो राजपूज्यता तथा सुख मिलता है बीचमें पुत्रादिलाभ और अंतमें कष्टफल कहना ॥३०॥ दूसरे भावगत गुरुकी दशामे धनकी वृद्धि राजासे मान बियाकी चर्चावाली राजसभामे भवेश अपनेसे सबका उपकार विजय और सुख इतने फल होते हैं ॥ ३१ ॥

नृपकृतबहुमानं भ्रातृभिर्भूमिलाभं परयुतविजनैर्वा दत्तगोभमिवित्तम्॥अशनवसनभूपागंधमाल्यांबराणि परकृतमुपकारं विज्ञतामेति शौर्य्यम्॥ ३२ ॥ तृतीयस्थगुरोर्दाये भ्रातृणां च सुखं भवेत् ॥ नृपदत्तं धनं सौख्यं गंधमाल्यांबरादिकम् ॥ ३३ ॥ नीरोगता पुत्रकलत्रलाभं लग्ना[illegible]थस्य गुरोर्दशायाम् ॥आदौ भवे-

[illegible] जनशयनस्त्रीपुत्रधनयुक्तः ॥ १ [illegible] यं सरोगम् ॥ ३४ ॥ जीवो मर-

थां स्त्रीसंगनष्टार्थविरुद्धधर्मम् ॥ [illegible] नहानिम् ॥ स्थानच्युतिं विदेशं

[illegible]रुजं भूपतिमाननं च ॥ २ ॥

[illegible]शाके फल कहतेहैं परम उच्चगत शुक्रकी दशामें मौ[illegible] के राजाका किया बहुत मान, भाइयोंसे [illegible]ला होवै सुगंधित पुष्प, वस्त्र, भोजन, शय्या, स्त्री, [illegible] भूमि धन मिलै, भोजन, वस्त्र, उच्चराशिगत शुक्रकी दशामें स्त्रीसंगसे धन नष्टहो [illegible] मार उत्तम बुद्धिमत्व और सामर्थ्य [illegible] शिरमें रोग और राजासे मानभी पावै ॥ २ ॥ [illegible] दिया धन सुख और चन्दन [illegible] प्रथम निरोगता पुत्र स्त्री [illegible] मध्य गुरुकी दशा सुख [illegible] अंतमें स्त्री राजसन्मान

[illegible]णी शुक्रदशा प्रपन्ना धान्यांबरालंकृतिव[illegible] [illegible] परदारसंगम्

[illegible]सिद्धिं स्वजनैर्विरोधं मा[illegible]

सुतस्याप्यवरोहकाले [illegible]

ऽभगजीवदशायां संप्राप्तौ राज्यलाभमुपयाति ॥ बह्वर्थदारपुत्रान् भूपविरोधं स्वबंधुविद्वेषम् ॥ ३६ ॥ व्ययगतजीवदशायां प्राप्तौ वाहनादि समुपयाति ॥ लभते विदेशयानं नानाक्लेशैश्च परिभूतः ॥ ३७ ॥

ग्यारहवें गुरुकी दशामें राज्यलाभको प्राप्त होताहै धन स्त्री पुत्र बहुत होतेहैं, राजा तथा अपने बंधुजनोंमें द्वेष होताहै ॥३६॥ बारहवें गुरुकी दशामें वाहन आदि मिलतेहैं तथा अनेक प्रकारके क्लेशोंसे दबकर विदेशगमन मिलताहै ॥ ३७ ॥

पाके स्थानबलान्वितस्य च गुरोः क्षेत्रार्थदारात्मजान्संप्राप्नोति गजांश्च वस्त्रकनकं चित्रांबरं भूषणम् ॥ दिग्वीर्यान्वितदेवनायकगुरौ लोके प्रसिद्धिं तथा जीवे कालबलाधिके नृपवधूसन्मानतां याति सः ॥ ३८ ॥ निसर्गवीर्यान्वितजीवदाये निसर्गतश्चातिसुखं महत्त्वम् ॥ विद्याविलासं रतिकेलिसौख्यं भागीरथीतोयकृताभिषेकम् ॥ ३९ ॥ वक्रं गतस्यापि गुरोर्दशायां महार्थतां याति सुतार्थदारान् ॥ युद्धे जयं भूपतिमित्रतां च सुगंधजातांबरवाग्विलासम् ॥ ४० ॥

स्थानबली गुरुकी दशामें खेती, धन, स्त्री, पुत्र मिलतेहैं हाथी, घोडे, वस्त्र, सुवर्ण, अनेक रंगके वस्त्र भूषणोंका लाभ होत भी मिलताहै ॥ ७ ॥ अतिशत्रुराशिगत शुक्रकी दशामें की दशामें राजरानियोंसे सन्वेरक्ति शरीर शिथिल गुल्मरोग नेत्ररोग और संग्रहणी रोगका सुख बड़प्पन विद्याका विल

वक्रगति गुरुकी दशामें धन ोरपत्यार्थदारहानिः स्यात् ॥ भूपतिरोषं कु-
द्रव्य उत्तम वस्त्र और वा

दृग्वीर्ययुक्तस्य पापकर्माणि ॥ ९ ॥ मित्रक्षेत्रदशायां परोप-
समस्तभाग्यं शेश्च ॥ पूगारामकृपिः स्याद्देवमनुष्यैश्चवोद्धृता-
क्रूरपष्टचंशग अतिमित्रशुक्रदाये भूपतिसन्मानसौख्यं च ॥
लभते न समतं गजपतिसंघैर्निरस्तदोषैश्च ॥ ११ ॥

शुक्रकी दशामें पुत्र, धन, स्त्रीकी हानि होवै, बडे विलासादिकी हानि और
दृग्वली ॥ ९ ॥ मित्रराशिगत शुक्रदशामें पराया उपकार करे, ६४ कला जाने, विधि
भ्रमणभी जाने, सुपारी आदिका बाग खेती देवता एवं मनुष्योंके का धन आवै
निस्संदेह

॥ १० ॥ अतिमित्रराशिगत शुक्रकी दशामें राजासे सन्मान होवे, सुखमिले, गौ आदि पशु धन घोडे तथा निर्दोष श्रेष्ठ हाथियोंसे युक्त रहे ॥ ११ ॥

समर्क्षगस्यापि भृगोर्विपाके प्रमेहगुल्माक्षिगुदप्ररोगः ॥ किंचित्सुखं भूपतिवह्निचौरैर्भयं स्वनामांकितगद्यपद्यम् ॥ १२ ॥ नीचखेचरसंयुक्तभृगोर्दाये महद्भयम् ॥ अपवादकृतं दोषं लभते पापकर्मभिः ॥ १३ ॥ स्वोच्चस्थितेन सहितस्य भृगोर्विपाके राज्यं महत्त्वसमराधिपतित्वमेव ॥ हेमांबरादिमणिभूषणयानलाभं भेरीमृदंगपणवारववाद्यघोषैः ॥ १४ ॥

समराशिगत शुक्रकी दशामें प्रमेह गुल्मरोग नेत्ररोग गुदद्वारमे रोग होवैं, सुख थोडा मिले राजा अग्नि चोरसे भय होवै, अपने नामसे चिह्नित गद्य पद्य होवैं ॥ १२ ॥ नीचगत ग्रहसे युक्त शुक्रकी दशामे बडी भय होवै, झूठा कलंक पाप कर्मोंसे मिले ॥ १३ ॥ उच्चगत ग्रहसे युक्त शुक्रकी दशामें राज्य बडप्पन युद्धमें नायकता सुवर्णवस्त्रादि तथा मणियों सहित भूषण मिलें, भेरी मृदंग नकारे आदि बाजाओंके शब्दसहित गमन करे ॥ १४ ॥

पापान्वितस्यापि भृगोर्दशायां स्थानच्युतिं बंधुजनैर्विरोधम् ॥ आचारहानिं कलहप्रियत्वं कृष्यर्थभूम्यात्मजदारनाशम् ॥ १५ ॥ शुभान्वितस्यापि भृगोर्दशायां सौभाग्यमित्रात्मजधान्यलाभम् ॥ नरेशपूजां गजवाजिसंघं प्रवालमुक्तामणियानलाभम् ॥ १६ ॥

पापयुक्त शुक्रदशामें स्थानहानि, बंधुजनोंसे विरोध, आचारहीनता, झगडामें प्रेम, खेती, धन, भूमि, पुत्र, स्त्रीकी हानि होवै ॥ १५ ॥ शुभग्रहयुक्त शुक्रदशामें ( सौभाग्य ) उत्तम ऐश्वर्य, मित्र, पुत्र, अन्न, धनका लाभ, राजपूज्यता, हाथी घोडाओंके समूह, मूंगा, मोती, मणि, वाहन मिलें ॥ १६ ॥

पापेक्षितस्यापि भृगोर्दशायां मानार्थहानिं समुपैति दुःखम् ॥ स्त्रिया विरोधं स्वपदच्युतिं च विदेशवासं निजकर्महीनम् ॥ १७ ॥ शुभेक्षितस्यापि भृगोर्विपाके धनांबरं भूपतिपूजनं च ॥ जनाधिपत्यं स्वशरीरकांतिं कलत्रमित्रात्मजसौख्यमेति ॥ १८ ॥

पापदृष्ट शुक्रकी दशामें मान धन हानि और दुःख पाताहै, स्त्रीसे विरोध अपने पदकी हानि विदेशमें निवास और अपने कर्मसे हीनता मिलतीहै ॥ १७ ॥ शुभग्रहदृष्ट शुक्रदशामें धन वस्त्र राजासे पूजा बहुत मनुष्योंमें नायकता अपने शरीरमें उत्तमकांति स्त्री मित्र पुत्रोंका सुख मिलताहै ॥ १८ ॥

केन्द्रे गतस्य हि दशा भृगुनन्दनस्य यानांबरादिमणिभूषितदेहकांतिम् ॥ राज्यार्थभूमिकृपिवाहनवस्त्रशस्त्रदुर्गाधियानवनवासजलाभिषेकम् ॥ १९ ॥ लग्नगशुक्रदशायां संप्राप्तो राजमाननं लभते ॥ मणिगोधनकृषिलाभं परापवादं महोत्साहम् ॥ २० ॥ चतुर्थराशिस्थितशुक्रदाये राज्यं महत्सौख्यमुपैति यानम् ॥ कृषिक्रियावित्तपशुप्रजानां वृद्धिं प्रतापान्वितकीर्तिजालम् ॥ २१ ॥

केन्द्रगत शुक्रकी दशामें सवारी वस्त्रादि मिले, मणियोंसे भूषित शरीरकी कांति बढ़े, राज्य, धन, भूमि, कृषिकर्म, वाहन, वस्त्र, शस्त्र मिलें, किलामें गमन वनवास वन्यजल स्नान मिलें ॥ १९ ॥ लग्नगत शुक्रकी दशामें राजमान पाताहै, मणि, गौ, धन, कृषिका लाभ, बडा उत्साह और अपवाद मिलतेहैं ॥ २० ॥ चौथे शुक्रकी दशामें राज्य बडासौख्य वाहन पावै कृषिकर्म धनं पशु सन्तानकी वृद्धि होती है प्रतापसे युक्त कीर्तिजाल फैलताहै ॥ २१ ॥

कलत्रराशिस्थितशुक्रदाये कलत्रनाशं त्वथ वा विदेशम् ॥ प्रमेहगुलमादिशरीररोगं प्रभग्नवित्तात्मजबंधुराज्यम् ॥ २२ ॥ कर्मस्थशुक्रस्य दशाविपाके विद्याधनप्राप्तिनरेशपूजा ॥ भाग्योत्तरं पालितदेहकांतिं दिगंतरप्राप्तयशःप्रतापम् ॥ २३ ॥ त्रित्रिकोणगतः शुक्रः करोति नपपूज्यताम् ॥ यज्ञकर्मादिलाभं च गुरुपित्रोः सुखं यशः ॥ २४ ॥ पंचमस्थभृगोर्दाये पुत्रावाप्तिं विनिर्दिशेत् ॥ कीर्तिं च राजपूजां च सर्वेषामुपकारकम् ॥ २५ ॥

सप्तमगत शुक्रदशामें स्त्रीनाश अथवा विदेशगमन होवै, प्रमेह गुल्म आदि रोग शरीरमें होवै, धन पुत्र बंधुजन और राज्य भग्न होवैं ॥ २२ ॥ दशम शुक्रकी दशामें विद्याधनकी प्राप्ति राजासे पूजा ऐश्वर्यवृद्धि शरीरमें शृंगारादि कांति बढे और यश प्रताप दिगंतरोंमें फैले ॥ २३ ॥ नवमगत शुक्रकी दशा राजपूज्यता यज्ञकर्मादि लाभ गुरु एवं पिताका सुख तथा यश देती है ॥ २४ ॥ पंचम शुक्रकी दशामें पुत्रप्राप्ति कहनी तथा कीर्ति राजपूज्यता और अपने हाथसे सबका उपकार करना मिले ॥ २५ ॥

वित्तगशुक्रदशायां धनहानिमाहुर्धनायतिं चापि ॥ अन्नसुखं वाग्विलासं परोपकारं नरेशसन्मानम् ॥ २६ ॥ तृतीयराशिस्थितशुक्रदाये धैर्यं महोत्साहमदीनसत्त्वम् ॥ चित्रांबरालंकृतवाहनाप्तिं

सहोदराणां बहुभाग्यलाभम्॥२७॥ भृगोर्विपाकेऽरिगतस्य नाशं धान्यार्थबह्वात्मजसोदराणाम्॥ रोगं महत्कार्यविनाशनं च शत्रोर्भयं भूपतिवह्निचोरैः ॥ २८ ॥

धनस्थानगत शुक्रकी दशामें प्रथम धनहानि तब वृद्धिभी होतीहै, अन्नका सुख वाणीका विलास पराया उपकार तथा राजासे सन्मान मिलताहै ॥ २६ ॥ तीसरे शुक्रकी दशामें धैर्य मनका उत्साह बडा जहीन वा प्रताप विचित्र वस्त्रोंसे शोभित वाहनकी प्राप्ति और भाइयोंका भी बहुत ऐश्वर्य लाभ होवै ॥ २७ ॥ छठे शुक्रकी दशामें अन्न, धन, पुत्र, भाईयोका नाश होवै बडारोग उत्पन्न होवै कार्यहानि और शत्रु, राजा, अग्नि, चोरसे भय होवै ॥ २८ ॥

रंध्रे स्थितस्यापि भृगोर्विपाके शस्त्राग्निचौरक्षतमित्रविभ्रम्॥क्वचित्सुखं किंचिदुपैति वित्तं क्वचिन्नरेशात्तयशः प्रतापम् ॥ २९ ॥ लाभस्थितस्यापि भृगोर्विपाके सुगंधमाल्यांबरराजपूजाम् ॥ पुत्रार्थसौख्यं कृषिविक्रयं च दानं स्वनामांकितपद्यजालम्॥३०॥ व्ययगतशुक्रदशायां लभते धान्यार्थराजसन्मानम्॥ स्थानच्युतिं प्रवासं मातृवियोगं मनोविलासं च ॥ ३१ ॥

अष्टमगत शुक्रकी दशामें शस्त्र अग्नि चोरसे भय होवै, चोट लगे, विभ्र होवै, कभी सुखभी होवै, कभी धन पावै, कभी राजासे यश मिले, कभी प्रताप बढे ॥ २९ ॥ लाभगत शुक्रकी दशामें सुगंध पुष्प वस्त्र राजासे पूजा मिले, पुत्र तथा धनका सुख कृषिकर्ममें लाभ दानादि देना और अपने नामसे युक्त श्लोकादियोंके समूह होवै ॥ ३० ॥ बारहवें शुक्रकी दशामें अन्न धन राजासे सन्मान मिले, तथा स्थानहानि परदेशगमन माताका वियोग होवै और मनका विलास भी होवै ॥ ३१ ॥

जीवर्क्षगतस्य भृगोः स्त्रीपुत्रभूमिनाशनं कुरुते॥ कर्मसु नित्योद्विग्नो जननीक्लेशान्वितो मनोदुःखी ॥३२॥अर्कगशुक्रदशायां जीर्णगृहौकाः शुभावरोधश्च॥ लभते दारविनाशं भ्रातृवियोगं च कलहं च ॥ ३३ ॥ सिंहगशुक्रदशायां लभते विविधापदं मनोदुःखम् ॥ उद्योगरोगततः कर्मसु विफलेषु सर्वदाभिरतः ॥ ३४ ॥

गुरुराशिगत शुक्रदशा स्त्री पुत्र भूमिका नाश करतीहै, कामोंमें सर्वदा उद्विग्न रहताहै, माताको क्लेश मिलताहै मनमें दुःखी रहताहै ॥ ३२ ॥ अस्तगत शुक्रकी दशामें पुराने घरमें निवास

मिलताहै, भलेकाम रुकजातेहैं, स्त्रीहानि भाइयोंका वियोग और कलहभी होताहै ॥ ३३ ॥ सिंहराशिगत शुक्रकी दशामें अनेकप्रकार आपत्ति पाताहै मनमें दुःख उद्यमसे तथा रोगसे संतप्त और निष्फल होनेवाले कामोंमें सर्वदा तत्पर रहे ॥ ३४ ॥

शुक्रे स्थानबलाधिके नरपतेः सन्माननं भूषणं विद्यावादविवादगोष्ठिरसिकं नामद्वयं संभ्रमम् ॥ तस्मिन् दिक्प्रबलान्विते बहुयशः पुत्रार्थदाराम्बरं शुक्रे कालबलान्विते सुखधनं कीर्तिः स्वनामांकिता ॥ ३५ ॥ निसर्गवीर्ययुक्तस्य भृगोर्दाये महत्सुखम् ॥ कृषिगोभूमिवित्तादिभ्रातृमातृसुखं भवेत् ॥ ३६ ॥

स्थानबली शुक्रकी दशामे राजासे सन्मान भूषण मिले, विद्याके विवादवाली सभामें मनेश रसिकता बडे उत्साहसे दो नाम अर्थात् दूसरा अधिकारी नाम मिले, दिग्बली शुक्रकी दशामें बहुत यश बडे पुत्र, धन, स्त्री, वस्त्र मिलतेहैं कालबलयुक्त शुक्रदशामें सुख धन और अपने नामयुक्त कीर्ति मिलतीहै ॥ ३५ ॥ निसर्गबली शुक्रदशामें बडा सुख मिलताहै, कृषि भूमि धनादि बढतेहै, तथा भाई एवं माताका सुख होताहै ॥ ३६ ॥

वक्रंगतस्यापि भृगोः सुतस्य दशाविपाके त्वतिराजपूज्यम् ॥ मृदंगभेरीरवयुक्तयानं विचित्रवस्त्राभरणानि राज्यम् ॥ ३७ ॥ दृग्वीर्ययुक्तस्य भृगोर्विपाके यज्ञादिकर्माणि करोति काले॥ विद्याविलासं शयनाम्बरं च नृपाभिषेकं कलहं विरोधम्॥ ३८॥ क्रूरषष्ट्यंशयुक्तस्य भृगोर्दाये विपद्भयम् ॥ चौराग्निराजभीतिश्च कृषिगोभूमिनाशनम् ॥ ३९॥ सौम्यषष्ट्यंशयुक्तस्य भृगोर्दाये महत्सुखम् ॥ कूपारामतडागानां निर्माणं देवपूजनम् ॥ ४० ॥

वक्रगतशुक्रकी दशामें बहुतसी राजपूज्यता मिले, मृदंग भेरी आदियोंके शब्दसहित उसकी सवारी निकले, अनेक प्रकारके वस्त्र भूषण और राज्य मिले ॥ ३७ ॥ दृग्बली शुक्रकी दशामें समयपर यज्ञादिकर्म करताहै, विद्याका विलास मिले, शय्या वस्त्र मिलें, राजाका अभिषेक देखे और कलह विरोधभी होवै ॥ ३८ ॥ क्रूरषष्ट्यंशगत शुक्रकी दशामें विपत्ति भय चोर अग्नि राजासे भय कृषि गौ भूमिका नाश होवै ॥ ३९ ॥ शुभषष्ट्यंशगत शुक्रदशामें बडा सुख मिले कुंवां बगीचा तालाव बनावे, देवपूजन करे ॥ ४० ॥

वैशेषिकांशयुक्तस्य भृगोर्दाये महत्सुखम् ॥ वाहनं भूपसन्मानं भ्रातृस्त्रीधनसंपदः॥४१॥क्रूरद्रेष्काणसंयुक्तभृगोर्दायेऽरिभीतयः॥ कारागारमहत्कष्टमनलं चौरपीडनम् ॥ ४२ ॥

वैशेषिकांशगत शुक्रकी दशामें बहुत सुख मिले, वाहन राजसन्मान भाई स्त्री धनकी संपत्ति होवै ॥ ४१ ॥ क्रूरद्रेष्काणगत शुक्रकी दशामें शत्रुसे भय कैदमें रहनेसे बडा कष्ट और अग्नि चोरसे पीडा मिले ॥ ४२ ॥

उच्चक्षेत्रेपि नीचांशयुक्तः शुक्रोतिकष्टदः ॥ करोति राज्यनाशं च स्थाननाशमथापि वा ॥ ४३ ॥ उच्चांशयुक्तशुक्रोपि नीचराशिसमन्वितः ॥ कृषिगोभूमिवाणिज्यं धनधान्यविवर्द्धनम् ॥ ४४ ॥ इति शुक्रदशाफलम् ॥

उच्चराशिगतभी शुक्र नीचांशमें होवै तो उसकी दशा अतिकष्ट देतीहै राज्यनाश अथवा स्थाननाश करतीहै ॥ ४३ ॥ यदि नीचराशिमेंभी उच्चांशकी होवै तो कृषि, गो, भूमि व्यापार, धन, अन्नको बढातीहै ॥ ४४ ॥ इति शुक्रदशाफलम् ॥

### अथ शनिदशाफलविचारः ।

मन्दोच्युच्चदशायां ग्रामसभामण्डलाधिपत्यं स्यात् ॥ लभते विनोदशीलं पितृनाशं बंधुकलहं च ॥ १ ॥ स्वोच्चदशायां कुरुते देशभ्रंशं मनोरुजं दुःखम् ॥ वाणिज्यसत्त्वहानिं कृषिहानिं नृपविरोधं च ॥ २ ॥

अब शनिकी दशाका फल कहतेहैं परमोच्चगत शनिकी दशामे गांवसभा ( मण्डल ) परगन्नाका आधिपत्य मिले, खुशीकी वार्तालाप और पिताका नाश बंधुजनसे कलहभी होताहै ॥ १ ॥ उच्चगत शनिकी दशा दांत गिरातीहै, मनका रोग दुःख व्यापारमें हानि, तेजकी हानि कृषिहानि और राजासे विरोधभी करातीहै ॥ २ ॥

आरोहिणी वासरनाथसूनोर्दशाविपाके नृपलब्धभाग्यम् ॥ वाणिज्यलाभं कृषिभूमिलाभं गोवाजियानं सुतदारलाभम् ॥ ३ ॥ दिनेशसूनोस्त्ववरोहकाले राज्यच्युतिं दारसुतार्थनाशम् ॥ भाग्यक्षयं भूपतिकोपयुक्तं प्रेष्यत्वमायाति गुदाक्षिरोगम् ॥ ४ ॥ नीचस्थितस्यापि दिनेशसूनोर्दाये कलत्रात्मजसोदराणाम् ॥ नाशं महत्कष्टतरां कृषिं च नीचानुवृत्त्या समुपैति वृत्तिम् ॥ ५ ॥

उच्चराशिमे जानेवाले शनिकी दशामें राजासे ऐश्वर्य मिलें, व्यापारमें लाभ गौ घोडे सवारी पुत्र स्त्रीका लाभ होवै ॥ ३ ॥ नीचराशिमें जानेवाले शनिकी दशामें राज्यहानि स्त्री पुत्र धनका नाश ऐश्वर्यका क्षय राजाके कोपसहित तथा पराया प्रेष्यत्व ( दूतकर्म ) और गुदा

एवं नेत्रमें रोग होवै ॥ ४ ॥ नीचराशिगत शनिकी दशामें स्त्री पुत्र भाईयोंका नाश कृषि बडे कष्टसे और आजीवन नीच वृत्तिसे होवै ॥ ५ ॥

मूलत्रिकोणनिलयस्य शनेर्दशायां देशान्तरादिवनवासमुपैति काले ॥ नामद्वयं यदि सभानगराधिपत्यं विद्वेषणं सुतकलत्रधनादिभिर्वा ॥ ६॥ स्वक्षेत्रगस्य च दशा दिवसेशसूनोर्द्वेषं करोति बलपौरुषकीर्तिजालम् ॥ राजाश्रयं कनकभूषणभूमिलाभं धैर्यं स्वनामसदृशानुगुणं च सौख्यम् ॥ ७ ॥

मूलत्रिकोण ११ राशिगत शनिकी दशामें देशांतरगमन वनमें वास पावै तथा उपाधिनाम सभा एवं नगरका आधिपत्य पावै और पुत्र स्त्री अथवा धनसे विद्वेतिता पावै ॥ ६ ॥ अपनी राशिगत शनिकी दशा द्वेष करातीहै तथा बल पुरुषार्थ कीर्तिजाल राजाका आश्रय सुवर्णके भूषण भूमि धैर्यता मिलतेहैं अपने नाम गुणोंके सदृश सुखभी मिलताहै ॥ ७ ॥

शनेर्दशायामतिशत्रुगस्य स्थानच्युतिं बंधुविरोधतां च ॥ चौरादिभूपैर्भयमत्रविघ्नो भृत्यार्थदारात्मजकोपमेति॥८॥दिनेशसूनोस्त्वरिराशिगस्य वैश्याद्धनं प्राप्यति भूमिनाशम् ॥ कृषेर्विनाशं स्वपदच्युतिं च वैरं समायाति शरीरकृच्छ्रम् ॥ ९ ॥

अतिशत्रुराशिगत शनिकी दशामें स्थानहानि बंधुजनमें वैर चौरादिभय राजाओंसे भय कार्यमे विघ्न नौकर धन स्त्री पुत्रोंका कोप पावै ॥८ ॥ शत्रुराशिगत शनिकी दशामें वणियेंसे धन पावै, भूमिका नाश कृषिका नाश पदकी हानि वैर शरीर कष्ट पावै ॥ ९ ॥

मित्रक्षेत्रदशायां मंदस्य तु शिल्पकर्मगुणवेत्ता ॥ ज्ञानबलं च प्रतापं ददाति दुःखं महत्त्वं च ॥ १० ॥ अधिमित्रमंददाये ददाति सौख्यं नरेशसन्मानम् ॥ सुतधनदारविशेषात् पशुकृषिमहिषादिवाणिज्यम् ॥ ११ ॥ समर्क्षगस्यापि शनेर्दशायां समानबुद्धिः सुतदारमित्रे ॥ भृत्यापदं बंधुजनेषु वैरं देहस्य कष्टं क्षयवातपित्तैः ॥ १२ ॥

मित्रराशिगत शनिकी दशा शिल्पकर्म कारीगरीके गुण जाने, ज्ञान बल प्रताप तथा दुःख और बडपनभी देतीहै ॥ १० ॥ अधिमित्रराशिगत शनिकी दशा सुख राजासे सन्मान पुत्र धन स्त्रीसे विशेषतः कृषि महिष आदिके व्यापारसे धन देतीहै ॥ ११ ॥ समराशिगत शनिकी दशामें पुत्र स्त्री मित्रोंमें समान बुद्धि रहती है, सेवकको आपत्ति बंधुजनोंमें वैर तथा क्षय वात पित्तसे देहकष्ट होताहै ॥ १२ ॥

नीचखेचरसंयुक्तशनेर्दाये महद्भयम् ॥ विप्रलंभोपवासश्च नीचवृत्त्यानुजीवनम् ॥ १३ ॥ स्वोच्चखेचरसंयुक्तशनेर्दाये महत्सुखम् किञ्चिद्राज्यं कृषेर्लाभं भृत्यवर्गार्थनाशनम् ॥ १४ ॥

नीचराशिगत ग्रहयुक्त शनिकी दशामें बडी भय होतीहै, कोई बात अंगीकार करके उसका संपादन न करना होवै निराहार रहना पडे, नीचवृत्तिसे आजीवन होवै ॥ १३ ॥ उच्चराशिगत ग्रहसे युक्त शनिकी दशामें बडा सुख मिले, थोडा राज्य कृषिसे लाभ होवै और सेवक तथा धनका नाशभी होवै ॥ १४ ॥

पापान्वितस्यापि शनेर्दशायां पापानि गूढानि करोति काले ॥
नीचस्त्रिया संगमनं विशेषाच्चौरादिनीचैः कलहं विदारम् ॥१५॥
शुभान्वितस्यापि शनेर्दशायां विशेषतो ज्ञानमुपैति काले ॥
परोपकारं नृपलब्धभाग्यं कृष्णानि धान्यान्ययशश्च लाभम् ॥१६॥

पापयुक्त शनिकी दशामें गुप्तपाप करताहै विशेषतः नीचस्त्रीका सगम करे चौरादि नीचोंसे कलह तथा स्त्रीहानि होवै ॥ १५ ॥ शुभग्रहयुक्त शनिकी दशामे विशेषकरिके ज्ञानपावै पराया उपकार करे राजासे ऐश्वर्य मिले कृष्णरगके अन्न और लोहेका लाभ होवै ॥ १६ ॥

पापेक्षितस्यापि शनेर्दशायां भृत्यार्थदारात्मजसोदराणाम् ॥नाशं समायाति परापवादं कुभोजनं कुत्सितगंधमाल्यम् ॥ १७ ॥
शुभेक्षितस्यापि शनेर्दशायां स्त्रीपुत्रभृत्यार्थमुपैति काले ॥ पश्चादुपैत्यत्र महत्वकष्टं गोभूमिवाणिज्यकृषेर्विनाशम् ॥ १८ ॥

पापदृष्ट शनिकी दशामें सेवक, धन, स्त्री, पुत्र और भाइयोंका नाश होवै, झूठा कलक लगे कुभोजन निंद्य चंदन पुष्पआदि मिलें ॥ १७ ॥ शुभग्रहदृष्ट शनिकी दशामें स्त्री पुत्र सेवकोंकी वृद्धि मिलतीहै, पीछे बडपन एव कष्ट और गौ, भूमि, व्यापार, कृषिका नाश होताहै॥ १८॥

केन्द्रान्वितशनेर्दाये कलहायासपीडनम् ॥ पुत्रमित्रार्थदारादिबंधूनां मरणं ध्रुवम् ॥ १९ ॥ लग्नस्थितशनेर्दाये देहकृच्छ्रमुपैति च ॥ स्थानच्युतिं प्रवासं च राजकोपं शिरोरुजम् ॥ २० ॥ चतुर्थस्थशनेर्दाये मातृतद्वर्गनाशनम् ॥ गृहदाहं पदभ्रंशं चौरार्ति नृपपीडनम् ॥ २१ ॥

केन्द्रगत शनिकी दशामे कलह श्रम पीडा तथा पुत्र मित्र धनादिहानि बधुजनमरण निश्चय होताहै ॥ १९ ॥ लग्नगत शनिकी दशामें देहमें कष्ट पावै, स्थनहानि विदेशवास राजाका

कोप और शिरमें रोग होताहै ॥ २० ॥ चौथे भावगत शनिकी दशामें माता तथा मातृवर्ग मांवसी ताई चाची दादी आदिका नाश, घरका जलना, पदसे भ्रष्ट होना और चोरसे राजासे पीडन मिलताहै ॥ २१ ॥

दारराशिगतस्यापि शनेर्दायेऽरिपीडनम् ॥ मूत्रकृच्छ्रं महाद्वेषं स्त्रीहेतोर्मरणं च वा ॥ २२ ॥ दशमस्थशनेर्दाये कर्मनाशमुपैति च ॥ देशांतरं पदभ्रंशं निगडं राजपीडनम् ॥ २३ ॥ द्वितीयस्थशनेर्दाये वित्तनाशमथाक्षिरुक् ॥ राजकोपं मनस्तापमन्नद्वेषं मनोरुजम् ॥ २४ ॥ तृतीयस्थशनेर्दाये कृषिगोधनसंपदः ॥ मनोजाड्यं मनोत्साहं भ्रातृतद्वर्गनाशनम् ॥ २५ ॥

सप्तमगत शनिकी दशामें शत्रुसे पीडन मूत्रकृच्छ्र रोग बडा वैर अथवा स्त्रीके कारण मरण होवै ॥ २२ ॥ दशमगत शनिकी दशामें कर्मका नाश पावै, देशांतरगमन पदसे भ्रष्टता कैद राजासे पीडन इतने फल होतेहैं ॥ २३ ॥ दूसरे शनिकी दशामें धननाश तथा नेत्ररोग राजाका कोप मनमें संताप अन्नमें अरुचि मनमें रोग होतेहै ॥ २४ ॥ तीसरे भावगत शनिकी दशामे कृषि गौ धनकी संपत्ति मनकी जडता ( कुन्द ) ता तथा मनका उत्साह और भाई भ्रातृवर्गका नाश होवै ॥ २५ ॥

पंचमस्थशनेर्दाये पुत्रनाशं मनोरुजम् ॥ राजकोपं भृत्यनाशं बंधुस्त्रीवित्तविभ्रमम् ॥ २६ ॥ षष्ठस्थरविसूनोस्तु दशाकालेऽरिपीडनम् ॥ व्याधिचौरविषैर्बाधां गृहक्षेत्रविनाशनम् ॥ २७ ॥ मरणपदस्थो मंदः करोति नित्यं सुतार्थदाराणाम् ॥ नाशं भृत्यजनानां गोमहिषभूमिदारनाशं च ॥ २८ ॥ नवमगतमंदःदाये पित्रोर्नाशं गुरोस्तथैवापि ॥ लभते विदेशयानं स्वकुलजातैर्विनाशमुपयाति ॥ २९ लाभगतमंददशायां लभते विविधार्थ सौख्यसन्मानम् ॥ सुतदारभृत्यसौख्यं मनोविलासं कृपेश्च धनलाभः ॥ ३० ॥

पंचमगत शनिकी दशामें पुत्रनाश मानसी रोग राजाका कोप सेवकका नाश बंधुजन स्त्री धनका विभ्रम होवै ॥ २६ ॥ छठे शनिकी दशामे शत्रुपीडा रोग चोर और विषसे पीडा मिले घर खेतीका नाश होवै ॥ २७ ॥ अष्टमस्थानस्थित शनिकी दशा पुत्र, धन, स्त्रियोंका नाश, भृत्यहानि, गौ, भैंस, भूमि, स्त्रीनाश करतीहै ॥ २८ ॥ नवम शनिकी दशामें मातापि-

तीका नाश तथा गुरुका नाश परदेशगमन और अपने कुलवालोंसे नाशको प्राप्त होवै ॥ २९ ॥ ग्यारहवें शनिकी दशामें नानाप्रकार धन, सुख, सन्मान, पुत्र, स्त्री, सेवकोंका सुख, मनकी विलासता ( खुशी खेल हंसीआदि ) और कृषिसे धनलाभ होवै ॥ ३० ॥

व्ययगतमंददशायां भीतिं चौराग्निभूपसंघैश्च ॥ विविधापदं च दुःखं विदेशयानं स्वबंधुनाशश्च ॥ ३१ ॥ अर्कगमंददशायां स्वजनद्वेषं परस्त्रियं लभते ॥ भृत्यापत्यविरोधं महोद्यमं दोषपरिभूतम् ॥ ३२ ॥

व्ययभावगत शनिकी दशामें चोर अग्नि राजाओंसे भय नानाप्रकारकी आपत्ति दुःख परदेशगमन बंधुविनाश होताहै ॥ ३१ ॥ अस्तंगत शनिकी दशामें अपने मनुष्योंसे द्वेष परस्त्रीसंग सेवक तथा पुत्रोंसे विरोध होवै, बडे उद्यम होवै परंतु दोषपूरित ॥ ३२ ॥

नीचांशमंददाये नीचाचारेण जीवनं लभते ॥ सर्वेषां प्रेष्यत्वं धनसुतदारैश्च विग्रहं दुःखम् ॥ ३३ ॥ उच्चांशमंददाये विविधसुखानन्दभोगभाग्यादीन् ॥ कुरुते विदेशयानं ग्रामसभामण्डलाधिपत्यं वा ॥ ३४ ॥ आदौ मंददशायामतिदुःखं मातृनाशनं कुरुते ॥ मध्ये विदेशयानं परगृहवासं परान्नभुक् चांते ॥ ३५ ॥

नीचांशगत शनिदशामें नीचकर्माचरणसे आजीवन मिलताहै, सबका प्रेष्य ( दूतत्व ) धन पुत्र स्त्रीसे कलह तथा दुःख मिलतेहैं ॥ ३३ ॥ उच्चांशगत शनिकी दशामें अनेकप्रकार सुख आनन्द भोग ऐश्वर्यआदि होतेहै,वह परदेशगमन वा ग्राम. (सभा) कचहरी परगनाका मालिक बनाती है ॥ ३४ ॥ शनिकी दशा प्रथम अतिदुःख माताका नाश मध्यमें विदेशगमन अंतमें पराये घरमें निवास पराया अन्न भोजन करातीहै ॥ ३५ ॥

स्थानवीर्ययुतमंददशायां दारपुत्रधनकीर्तिमुपैति ॥ चोरशत्रुनृपवह्निभयं वा धान्यभूमिकृपिवाहनलाभम् ॥ ३६ ॥ मंदस्य दिग्वीर्ययुतस्य दाये दिगंतरादात्मसुतार्थकीर्तिम् ॥ भूगूढदारात्मजसोदराणां विनाशनं बंधुजनैर्विरोधम् ॥ ३७ ॥ कालवीर्ययुतमंददशायां कालकूटविषभीतिमुपैति ॥ दारपुत्रनृपचोरभयं वा धान्यभूमिकृपिवाहनलाभम् ॥ ३८ ॥

स्थानबली शनिकी दशामें स्त्री पुत्र धन और कीर्ति पाताहै अथवा चोर, शत्रु, राजा, अग्निसे भय तथा धान्य, भूमि, कृषि, वाहनका लाभ होताहै ॥ ३६ ॥ दिग्बलयुत शनिकी

दशामें दिगतरसे कीर्ति आवे पुत्र धन मिलें भूमि गुप्तस्त्री पुत्र भाईयोंकी हानि बंधुजनसे विरोध होवै ॥ ३७ ॥ कालबली शनिकी दशामें कालकूट विषकी भय अथवा स्त्री पुत्र, भय राज चौर भय मिलती है, अन्न, भूमि, कृषि और वाहन लाभ होताहै ॥ ३८ ॥

वक्रचारयुतो मन्दः करोति विफलां क्रियाम् ॥ उद्योगभंगं दुःखं च सोदराणां च नाशनम् ॥ ३९ ॥ क्रूरषष्ठ्यंशयुक्तस्य शनिदाये महद्भयम् ॥ नृपकोपं पदभ्रंशं कारागृहनिवेशनम् ॥ ४० ॥ सौम्यषष्ट्यंशसंयुक्तशनिदाये महत्सुखम् ॥ दारपुत्रार्थसंपत्तिं लभते बन्धुविग्रहम् ॥ ४१ ॥

वक्रगत मंगलकी दशा कार्यविफल उद्योगभंग दुःख और भाईयोंका नाश करतीहै ॥ ॥ ३९ ॥ क्रूरषष्ठ्यंशगत शनिकी दशामें बडीभय राजकोप पदहानि और कैदघरमें निवास होताहै ॥ ४० ॥ शुभषष्ठ्यंशगत शनिकी दशामें बडासुख स्त्री पुत्र धनकी संपत्ति मिले और बधुवर्गमे कलह होवै ॥ ४१ ॥

वैशेषिकांशसंयुक्तः शनिः सौख्यं करोति च ॥ विशेषाद्राजसन्मानं विचित्रांबरभूषणम् ॥ ४२ ॥ क्रूरद्रेष्काणसंयुक्तशनिदाये महद्भयम् ॥ उद्बंधनं विषाद्भीतिं नृपचौराग्निजं भयम् ॥ ४३ ॥ नीचराशिगतो मंदः स्वोच्चांशकसमन्वितः ॥ दशादौ दुःखमापाद्य दशांते सुखदो भवेत् ॥ ४४ ॥ उच्चराशिगतो मंदो नीचांशकसमन्वितः ॥ दशादौ सुखमापाद्य दशान्ते कष्टदो भवेत् ॥ ४५ ॥ इति श्रीसर्वार्थचिंतामणौ गुर्वादिशन्यन्तदशाफलनिरूपणो नाम पंचदशोऽध्यायः ॥ १५ ॥

वैशेषिकांशगत शनिकी दशा सुख करतीहै, विशेषतः राजासे सन्मान अनेकप्रकारके वस्त्र भूषण देतीहै ॥ ४२ ॥ क्रूरद्रेष्काणगत शनिकी दशामें बहुत भय फांसी लटकना विषसे भय राजा चौर अग्निसे भय होतीहै ॥ ४३ ॥ नीचराशिगत शनि यदि उच्चांशकमें होवै तो दशाके आदिमें दुःख देकर अंतमें सुख देनेवाला होताहै ॥ ४४ ॥ उच्चराशिगत शनि यदि नीचांशकमें होवै तो दशाके आदिमें सुख देकर अंतमें कष्ट देनेवाला होताहै ॥ ४५ ॥

इति श्रीसर्वार्थचिन्तामणौ माहीधरीभाषाटीकायां गुर्वादिशन्यन्तदशाफलनिरूपणाऽध्यायः पञ्चदशः ॥ १५ ॥

# षोडशोध्यायः ॥ १६ ॥

अथ राहुकेतुदशाफलविचाराध्यायः ।

राहोस्तु वृषभं केतोर्वृश्चिकं तुंगसंज्ञितम् ॥ मूलत्रिकोणं कुम्भं च प्रियं मित्रभमुच्यते ॥ १ ॥ एषां सप्तमराशिस्तु केतोर्मूलत्रिकोणभम् ॥ षष्ठाष्टरिष्फगो राहुः स्वदाये कष्टदो भवेत्॥२॥ उच्चस्थः सैंहिकेयस्तु तत्पाके सुखदो भवेत्॥ राज्यं करोति मित्राप्तिं धनधान्यविवर्द्धनम् ॥ ३ ॥

राहुका वृष,केतुका वृश्चिक उच्चसंज्ञक है, कुंभ मूलत्रिकोण मेष मित्रराशि है ॥ १ ॥ इनकी सातवीं राशि केतुका मूलत्रिकोण है, राहु ६ । ८ । १२ भावोंमें अपनी दशामें कष्ट देताहै ॥ २ ॥ उच्चगत राहु अपनी दशामें सुख देनेवाला होताहै, राज्य मित्रप्राप्ति और अन्न धनकी वृद्धि करताहै ॥ ३ ॥

राहुर्नीचस्थितो दाये चौराग्निनृपभीतिदः ॥ उद्बंधनं विषाद्भीतिं कुरुते सिंहिकासुतः ॥ ४ ॥ राहोर्दशायां संप्राप्तौ नृपचौराग्निपीडनम् ॥ विदेशयानं दुःखार्तिं वनवासाद्भयं ध्रुवम् ॥ ५ ॥ लग्नगतराहुदाये बुद्धिविहीनं विषाग्निशस्त्राद्यैः ॥ बंधुविनाशं लभते दुःखार्तिं च पराजयं समरे ॥ ६ ॥

नीचगत राहुदशामें चौर अग्नि राजासे भय देताहै, फांसी लटकना विषसे भय करताहै ॥ ४ ॥ राहुकी दशामें राजा चोर अग्निसे पीडन विदेशगमन दुःख पीडा और वनवाससे निश्चय भय होतीहै ॥ ५ ॥ लग्नस्थित राहुकी दशामें बुद्धिहीनता विष अग्नि शस्त्रादिसे भय बंधुविनाश दुःख पीडा मिलतीहै, युद्धमें हारभी मिलतीहै ॥ ६ ॥

राहोर्दशायां धनराशिगस्य राज्यं च वित्तं हरते विशेषात् ॥ कुभोजनं कुत्सितराजसेवा मनोविकारं त्वनृतं प्रकोपम् ॥ ७ ॥ तृतीयराशिस्थितराहुदाये पुत्रार्थदारात्मसहोदराणाम्॥सुखं कृषेर्वंधनमाधिपत्यं विदेशयानं नरपालपूज्यम् ॥ ८

दूसरे राहुकी दशामें राहु विशेषतः राज्य तथा वित्तभी हरण करताहै, कुभोजन मिले निन्द्य राजाकी सेवा मनमें विकार झूठ और क्रोध होवे ॥ ७ ॥ तीसरे राहुकी दशामें पुत्र धन अपने भाइयोंका सुख कृषिकर्मसे बंधन आधिपत्यता विदेशगमन और राजासे पूज्यता मिले ॥ ८ ॥

चतुर्थराशिस्थितराहुदाये मातुर्विनाशं त्वथवा तदीयम् ॥ क्षेत्रार्थनाशं नृपतेः प्रकोपं भार्यादिपातित्यमनेकदुःखम् ॥ ९ ॥ चौराग्निबंधार्तिमनोविकारं दारात्मजानामपि रोगपीडा ॥ चतुर्थराशिस्थितराहुदाये प्रभग्नसंसारकलत्रपुत्रम् ॥ १० ॥ बुद्धिभ्रमं भोजनसौख्यनाशं विद्याविवादं कलहं च दुःखम् ॥ कोपं नरेन्द्रस्य सुतस्य नाशं राहोः सुतस्थस्य दशाविपाके ॥ ११ ॥

चौथे राहुकी दशामें माताका विनाश अथवा अपना विनाश होवै, खेती धनका नाश राजाका कोप स्त्री आदिको पतितता अनेक दुःख होतेहै ॥ ९ ॥ औरभी फलहै कि चोर अग्निभय बंधन पीडन मनका विकार स्त्रीपुत्रोंको भी रोग पीडा होवै, स्त्री पुत्र और संसारसे मन विविक्त रहे ॥ १० ॥ पंचमराहुकी दशामें बुद्धिका भ्रम भोजनका सुख नाश होवै, विद्यामे विवाद कलह दुःख राजकोप पुत्रनाश होताहै ॥ ११ ॥

दशाविपाके त्वरिराशिगस्य चौराग्निभूपैर्भयमाप्तनाशम् ॥ प्रमेहगुल्मक्षयपित्तरोगं त्वग्दोषरोगं त्वथवा मृतिं च ॥ १२ ॥ कलत्रराशिस्थितराहुदाये कलत्रनाशं समुपैति शीघ्रम् ॥ विदेशयानं कृषिभाग्यहानिं सर्पाद्भयं मृत्युसुतार्थनाशम् ॥ १३ ॥ राहोर्दशायां निधनस्थितस्य यमालयं याति सुतार्थनाशम् ॥ चौराग्निभूपैः स्वकुलोद्भवैश्च भयं भृगोर्वा वनवासदुःखम् ॥ १४ ॥

छठे राहुकी दशामें चोर अग्नि राजासे भय, लाभका नाश, अपने हितैषीका नाश, प्रमेह, गुल्म क्षय, पित्तरोग, त्वचाके दोषका रोग होवै अथवा मृत्यु होवै ॥ १२ ॥ सप्तमगत राहुकी दशामें स्त्रीनाश शीघ्र होताहै, परदेशगमन कृषि तथा ऐश्वर्यकी हानि सर्पसे भय मृत्यु पुत्र धन नाश होवै ॥ १३ ॥ अष्टमगत राहुदशामें यमालय जाताहै, पुत्र धन हानि होतीहै, चोर अग्नि राजासे तथा अपने कुलवालोंसे भय होवै (भृग) सिंह भेडियाआदिकी भय होवै ॥ १४ ॥

राहोर्दशायां नवमस्थितस्य पित्रोर्विनाशं लभते मनुष्यः ॥ विदेशयानं गुरुबंधुनाशं स्नानं समुद्रस्य सुतार्थनाशम् ॥ १५ ॥ मानस्थितस्यापि दशाविपाके राहोः प्रवृत्तिं लभते मनुष्यः ॥ पुराणधर्मश्रवणादिभिश्च गांगेयतोयैरपि शुद्धदेहः ॥ १६ ॥ सौम्यर्क्षगश्चेत्फलमेवमेव पापर्क्षगश्चेन्न तथाभवेद्धि ॥ प्रोक्तं फलं यत्सकलं तदेव सौम्यर्क्षगश्चेत्फलमन्यथा स्यात् ॥ १७ ॥

नवमगत राहुकी दशामें मनुष्य माता पिताका नाश विदेशगमन गुरुजन बंधुजनका नाश पुत्र धननाश होवै तथा समुद्रस्नान मिळे ॥ १५ ॥ दशमराहुकी दशामें मनुष्य कर्ममें प्रवृत्ति पावै पुराण धर्म श्रवणआदि करके धर्ममें प्रवृत्ति होवै गंगाजलसे देह शुद्ध होवै ॥ १६ ॥ राहु शुभराशिमें होवै तब ऐसा फल होताहै पापराशिमें होवै तो वैसा फल न होगा पापराशिमें होनेसे उक्तफल विपरीत होताहै ॥ १७ ॥

पापक्षेत्रगतो राहुः कर्मस्थः पापसंयुतः ॥ अभिशस्तस्तदा काले पुत्रदाराग्निपीडनम् ॥ १८ ॥ आयराशिगतो राहुस्तत्पाके नृपमाननम् ॥ धनार्तिं दारलाभं च गृहक्षेत्रादिसंपदः ॥ १९ ॥ व्ययगतराहुदशायां देशभ्रंशं मनोरुजं कुरुते ॥ विच्छिन्नदारपुत्रं कृपिपशुधनधान्यसंपदां नाशम् ॥ २० ॥

दशमराहु पापराशिमें होवै तथा पापयुक्त होवै तो झूठा कलंक लगे पुत्र स्त्री अग्निसे पीडन मिले ॥ १८ ॥ लाभगत राहुकी दशामें राजमान धनप्राप्ति स्त्रीलाभ मकान खेती आदिसंपत्ति होवैं ॥ १९ ॥ बारहवें राहुकी दशामें देश छूटे मनमें रोग करताहै स्त्री पुत्र उच्छिन्न होवें कृषि धन अन्न संपत्तियोंका नाश होवै ॥ २० ॥

कुलीरगोमेषयुतस्य राहोर्दशाविपाके धनलाभमेति ॥ विद्याविनोदं नृपमाननं च कलत्रभृत्यात्मसुखं प्रयाति ॥ २१ ॥ पाथोनमीनाश्वयुतस्य राहोर्दशाविपाके सुतदारलाभम् ॥ देशाधिपत्यं नरवाहनं च दशावसाने सकलं विनाशम् ॥ २२ ॥ पापर्क्षसंयुक्तफणीन्द्रदाये देहस्य कार्श्यं स्वकुलस्य नाशम् ॥ भूपाद्भयं वञ्चनतोऽरिभीतिः प्रमेहकासक्षयमूत्रकृच्छ्रम् ॥ २३ ॥

कर्कवृषमेषगत राहुकी दशामें धनलाभ विद्याविनोद राजासे सन्मान मिलताहै स्त्री सेवक तथा शरीर सुखको प्राप्त होताहै ॥ २१ ॥ कन्यामीनधनके राहुकी दशामें पुत्र स्त्रीलाभ देशमें अधिपतिता नरवाहन मिलतेहैं परंतु दशाके अंतमें सब उक्तवस्तुका नाश होताहै ॥ ॥ २२ ॥ पापराशिगत राहुकी दशामें देहकृश अपने कुलका नाश राजासे भय ठगीसे शत्रुसे भय प्रमेह, खांसी, क्षय, मूत्रकृच्छ्र रोग होते हैं ॥ २३ ॥

शुभदृष्टियुतो राहुः करोति सफलक्रियाम् ॥ राजमाननमर्थार्तिं बंधूनां मरणं ध्रुवम् ॥२४॥ पापदृष्टियुतो राहुः कर्मनाशं करोति च ॥ उद्योगभंगं देहार्तिं चौराग्निनृपपीडनम् ॥ २५ ॥

उच्चग्रहयुतो राहूराज्यलाभं करोति च ॥ स्त्रीपुत्रधनसंपत्तिवस्त्राभरणलेपनम् ॥ २६ ॥ नीचग्रहयुतो राहुर्नीचवृत्त्यानुजीवनम् ॥ कुभोजनं कुदारं च कुपुत्रं लभते तदा ॥ २७ ॥ दशादौ दुःखमाप्नोति दशामध्ये सुखं यशः ॥ दशांते स्थाननाशं च गुरुपुत्रादिनाशनम् ॥ २८ ॥ इति राहुदशाफलविचारः ॥

शुभग्रहसे दृष्ट राहुकी दशा कार्यसफल राजमान धनागम और बंधुजनका मरण निश्चय करतीहै ॥ २४ ॥ पापग्रहसे दृष्ट राहुकी दशा कार्यका नाश उद्यम भंग शरीरपीडा और चोर अग्नि राजासे पीडन करतीहै ॥ २५ ॥ उच्चग्रहयुत राहुकी दशा राज्यलाभ स्त्री पुत्र धनकी संपत्ति वस्त्र भूषण चंदनादि लेपनद्रव्यकी प्राप्ति करतीहै ॥ २६ ॥ नीचराशिगत ग्रहकी दशामें नीचवृत्तिसे आजीवन कुभोजन कुस्त्रीकी प्राप्ति और कुपुत्र मिलताहै ॥ २७ ॥ राहुकी दशाके आदिमें दुःख मध्यमें सुख तथा यश और अंतमें स्थानहानि गुरु पुत्र आदियोंको पीडा होवै ॥ २८ ॥ इति राहुदशाफलविचारः

अथ केतुदशाफलम् ।

भार्यापुत्रविनाशनं नरपतेर्भ्रांतिर्महत्कष्टतां विद्यावन्धुधनातिमित्ररहितं रोगाग्निमित्रैर्भयम् ॥ यानारोहणपातनं विषजलैः शस्त्रादिभिर्वा भयं देशाद्देशविवासनं कलिरुचिं देहादिभिर्वा भयम् ॥ १ ॥ केतोर्दशायां संप्राप्तौ दारपुत्रविनाशनम् ॥ राजकोपं मनस्तापं चौराग्निकृपिनाशनम् ॥ २ ॥

केतुदशाके फलहैं कि स्त्री पुत्र नाश राजासे भ्रांति बडा कष्ट विद्या बधु धनागमन और मित्रोंसे रहितता रोग अग्नि मित्रोंसे भय सवारीसे गिरना विष जल शस्त्रादिसे भय एकदेशसे दूसरेदेश निकलना कलहमें रुचि अथवा रोगादिभय होताहै ॥ १ ॥ केतुकी दशा प्राप्तहुयेमें स्त्री पुत्र नाश राजाका कोप मनमें संताप चोर अग्निसे भय कृषिका नाश होताहै ॥ २ ॥

केन्द्रस्थस्य दशाकेतोः करोति विफलक्रियाम् ॥ राज्यार्थसुतदाराणां नाशनं विपदं तथा ॥ ३ ॥ लग्नकेंद्रगतस्यापि केतोर्दाये महद्भयम् ॥ ज्वरातिसारमेहं च स्फोटकादिविषूचिकाः ॥ ४ ॥ धनराशिगतस्यापि केतोर्दाये धनक्षयम् ॥ वाक्पारुष्यं मनोदुःखं कुत्सितान्नं मनोरुजम् ॥ ५ ॥ तृतीयराशिगस्यापि

केतोर्दाये महत्सुखम् ॥ मनोवैकल्यमायाति भ्रातृभिर्द्वेषणं परम् ॥ ६ ॥ चतुर्थराशिगस्यापि केतोर्दाये सुखक्षयम् ॥ प्रभग्नदार-पुत्रादिगृहे धान्यप्रहर्षितः ॥ ७ ॥

केन्द्रगत केतुदशा कार्य व्यर्थ करतीहै राज्य, धन, पुत्र, स्त्रीका नाश तथा विपत्ति करती-है ॥ ३ ॥ लग्नगत केतुदशामें बडीभय ज्वर अतिसार प्रमेह विस्फोटकादि रोग विषूचिका ( हैजा ) करतीहै ॥ ४ ॥ दूसरे भावस्थ केतुकी दशामे धनका क्षय कठोरवाणी मनमें दुःख और निन्द्य अन्न भोजन मनमें रोग होतेहैं ॥ ५ ॥ तीसरे केतुकी दशामें बडासुख मिलताहै मन विकल होताहै भाइयोंसे परमवैर होताहै ॥ ६ ॥ चौथे केतुकी दशामें सुखहानि स्त्री पुत्रा दिसे अलग होवै घरमे अन्नसे हर्षित रहे ॥ ७ ॥

पंचमस्थस्य केतोस्तु दशाकाले सुतक्षयम् ॥ बुद्धिभ्रमं विशेषेण राजकोपं धनक्षयम् ॥ ८ ॥ केतोस्त्वरिगतस्यापि दशाकाले महद्भयम् ॥ चौराग्निविषभीतिश्च दशार्ति समुपैति च ॥ ९ ॥ कलत्रराशिसंयुक्तकेतोर्दाये महद्भयम् ॥ दारपुत्रार्थनाशं च मूत्रकृच्छ्रं मनोरुजम् ॥ १० ॥ केतोरष्टमयुक्तस्य दशाकाले महद्भयम् ॥ पितृमृत्युश्वासकासग्रहण्यादिक्षयान्वितः ॥ ११ ॥ नवमस्थस्य केतोस्तु दशापाके पितुर्विपत् ॥ गुरोर्वा विपदं दुःखं शुभकर्मवि-नाशनम् ॥ १२ ॥

पंचम केतुकी दशामें पुत्रक्षय बुद्धिभ्रम विशेषतः राजाका कोप और धनका क्षय होताहै ॥ ८ ॥ छठे केतुकी दशामें बडीभय चोर अग्नि विषसे भय और फटे वस्त्रोंके किनारे पहरने-को मिलें ॥ ९ ॥ सप्तम केतुकी दशामें भी बहुतभय स्त्री पुत्र धननाश मूत्रकृच्छ्र रोग तथा मानसी रोग होताहै ॥ १० ॥ अष्टमभावगत केतुकी दशामें बडीभय पिताकी मृत्यु श्वास कास संग्रहिणीआदि तथा क्षयरोगसे युक्त होवै ॥ ११ ॥ नवम केतुकी दशामें पिताकी वि-पत्ति अथवा गुरुकी विपत्ति दुःख शुभकर्मका नाश होताहै ॥ १२ ॥

कर्मस्थकेतोः संप्राप्तौ दशायां सुखमेति च ॥ मानहानिं मनोजा-ड्यमपकीर्तिं मनोरुजम् ॥ १३ ॥ लाभस्थकेतोः संप्राप्तौ दाये सौख्यं करोति च ॥ भ्रातृवर्गादिसौख्यं च यज्ञदानादिवर्द्धनम् ॥ १४ ॥ रिष्फस्थकेतोः संप्राप्तौ दाये कष्टतरं भवेत् ॥ स्थानच्युतिं

प्रवासं च राजपीडाक्षिनाशनम् ॥ १५ ॥ दशादौ सुखमाप्नोति दशामध्ये महद्भयम् ॥ दशांते राजभीतिश्च देहजाड्यमथापि वा ॥ १६ ॥

दशमगत केतुकी दशा मानहुयेमें सुख पाताहै और मानहानि मनकी जडता अपयश मानसीरोगभी मिलतेहैं ॥ १३ ॥ लाभगत केतुकी दशामें सौख्य करताहै भ्रातृवर्गादिसे भी सुख मिलताहै यश दानादि पुण्य बढतेहैं ॥ १४ ॥ बारहवे केतुकी दशामें विशेषतर कष्ट होताहै स्थानहानि परदेशवास राजासे पीडा और नेत्रनाश होताहै ॥ १५ ॥ केतुकी दशाके आदिमें सुख, मध्यमे बडीभय और अंत्यदशामें राजासे भय अथवा शरीरमें जडता (शरीर जकडना) मिलता है ॥ १६ ॥

शुभवीक्षणसंयुक्तः केतुः सौख्यं करोति च ॥ राज्यार्थं गृहशांतिं च राजपूजां महादृढम् ॥ १७ ॥ पापेक्षितयुतो वापि केतुर्दुःखं करोति च ॥ ज्वरातिसारमेहांश्च त्वग्दोषं राजपीडनम् ॥ १८ ॥

शुभग्रहदृष्ट केतु अपनी दशामें सुख करताहै राज्य धन घरमें शांति राजपूजा और दृढता देताहै ॥ १७ ॥ पापग्रहयुक्त वा दृष्ट केतु स्वदशामें दुःख करताहै ज्वर अतिसार प्रमेह तथा त्वचामें रोग और राजासे पीडनभी करताहै ॥ १८ ॥ इति केतुदशाफलानि ॥

अथान्तर्दशाफलानि ।

तेजस्विनमतिसुखिनं सुस्थिरविभवं नृपाच्च लब्धधनम् ॥ स्वनवांशकबलयुक्तः पुरुषं कुर्याद्धनान्वितं ख्यातम् ॥ १ ॥ शुभदर्शनफलयुक्तः करोति विख्यातिकं सधनम् ॥ सुभगप्रयासममलं सुरूपदेहं सुसौम्यं च ॥ २ ॥

नवांशबलसे युक्त ग्रह पुरुषको तेजस्वी अतिसुखी स्थिर ऐश्वर्यमान् राजासे माप्तधन अन्यधनसे युक्त और ख्यात करताहै ॥ १ ॥ शुभग्रहोंसे दृष्ट ग्रह ख्यातिवाला धनयुक्त उत्तम परिश्रमी निर्मलतायुक्त सुरूपदेहयुक्त और मृदु करताहै ॥ २ ॥

अन्योन्यपष्ठाष्टमदायकाले नृपाद्भयं भृत्यजनैर्विरोधम् ॥ स्त्रिया विरोधं सुतदारनाशं चौराग्निबंध्वार्तिमनोविकारम् ॥ ३ ॥ पाकेश्वरादंत्यगतस्य भुक्तौ स्थानच्युतिं बंधुजनैर्विरोधम् ॥ विदेशयानं स्वजनैर्विरोधं पादाक्षिहृद्रोगमुपैति काले ॥ ४ ॥

षष्ठेश अष्टमेशकी परस्परदशा अर्थात् एककी दशा दूसरेके अंतर्दशामें राजासे भय सेवकजनोंसे विरोध स्त्रीसे विरोध पुत्र दार नाश चोर अग्नि बंधुजनोंसे पीडा मनमें विकार होता

है॥ ३॥ दशेशसे बारहवें ग्रहकी अंतर्दशामें स्थानहानि बन्धुजनोंसे विरोध विदेशगमन अपने मनुष्योंसे विरोध पैर नेत्र हृदयमें रोग मिलता है ॥ ४ ॥

**दशाधिपेनापि युतस्य भुक्तौ स्त्रीपुत्रभृत्यार्थकृषेर्विनाशम् ॥ उद्योगभंगं स्वजनैर्विरोधमाकस्मिकं दूषणमेति काले ॥ ५ ॥ दशाधिपाद्वित्तगतस्य भुक्तौ मृद्वन्नपानांबरगंधमाल्यम्॥परोपकारं स्वजनस्य सख्यं स्त्रीपुत्रबंध्वात्ममनोविलासम् ॥ ६ ॥ दशाधिपात्सोदरराशिगस्य भुक्तौ नृपाद्वित्तमुपैति सख्यम् ॥ सुगंधमाल्यांबरभूषणं च सुहृद्भवं भोजनसौख्यपुष्टिम् ॥ ७ ॥**

दशेशसे युक्त ग्रहकी अंतर्दशामें स्त्री, पुत्र, भृत्य, धन, कृषिका नाश, उद्यमभंग, अपने मनुष्योंसे विरोध, अचानक दूषण पावै ॥ ५ ॥ दशेशसे दूसरे ग्रहके अंतरमें मृदु अन्न, पान, वस्त्र, चदन पुष्प मिलें, पराया उपकार होवै, अपने मनुष्योंमे सख्य बढ़े, स्त्री, पुत्र, बधुजन, सुख, मनके विलास ( खुसी ) मिलतेहै ॥ ६ ॥ दशेशसे तीसरे ग्रहके अंतरमें राजासे धन सख्यता सुगंधवस्तु, पुष्प, वस्त्र, भूषण, मित्रोंका दिया भोजन सुख और पुष्टि इतनें फल होतेहै ॥ ७ ॥

**दायेश्वरादंबुगतस्य भुक्तौ दारात्मजार्थगृहधर्मयानम् ॥ मिष्टान्न पानांबरभूषणं च शुभग्रहश्चेत्फलमन्यथा तत् ॥ ८ ॥ ॥ पापग्रहोपि शुभदः खलु दायनाथाद्बन्धुस्थितस्वभवनोच्चबलादियुक्तः ॥ सौम्यग्रहोप्यशुभदः सुखराशियुक्तो दायेश्वरात्स्वभवनोच्चबलादिहीनः ॥ ९ ॥ दशानाथात्सुतस्थस्य भुक्तौ पुत्रादिमादिशेत् ॥ शुभग्रहस्य सौख्यं च पापभुक्तौ सुतक्षयम् ॥ १० ॥**

दशेशसे चतुर्थगत ग्रहके अंतरमे स्त्री, पुत्र, धन, गृहके धर्म वाहन मीठे अन्नजलादि तथा वस्त्र भूषण मिलतेहैं यदि वह शुभग्रह होवै तो यहफल विपरीत होताहै ॥ ८ ॥ दशेशसे चतुर्थगत ग्रह यदि अपनी राशि उच्चबलादिसे युक्त होवै तो पापग्रहभी शुभफल देताहै यदि राशिबल उच्चबलादिहीन होवै तो दशेशसे चौथा शुभग्रहभी अशुभफल देताहै ॥ ९ ॥ दशेशसे पंचमगत ग्रहके अन्तरमें पुत्रादि होवैं कहना यह शुभग्रहमें है पापग्रहमें पुत्रक्षय होताहै॥ १०॥

**अन्तर्दशायां पापस्य षष्ठस्थस्य दशेश्वरात् ॥ चौरादिऋणदेहार्तिं लभते पदविभ्रमम् ॥ ११ ॥ तस्मात्षष्ठस्य सौम्यस्य दशेशात्सुखवर्द्धनम्॥लभते पुत्रमित्राप्तिं स्वोच्चमूलादिगस्य तु॥१२॥**

दायेशात्सप्तमस्थस्य पापस्यापहृतौ तथा ॥ दारार्थपुत्रबंधूनां नाशं भूमिपतेर्भयम् ॥ १३ ॥ सप्तमस्थशुभस्यापि हृतौ सौख्यं दशाधिपात् ॥ नीचशत्रुविहीनस्य सद्रत्नांबरभूषणम् ॥ १४ ॥

दशेशसे छठे पापग्रहकी अंतर्दशामें चोरआदिकी भय ऋणकी भय देहपीडा और पदमें भ्रम पावै ॥ ११ ॥ दशेशसे छठा अंतरेश शुभग्रह होवै तो उक्तोंसे सुख बढे पुत्र मित्र मिलें यदि उच्च मूलत्रिकोणादिमें होवै ॥ १२ ॥ दशेशसे सप्तमगत पापग्रहके अंतरमें स्त्री, धन, पुत्र, बंधुका नाश तथा राजासे भय होवै ॥ १३ ॥ वह सप्तमस्थ शुभ होवै तो सुख देताहै यदि नीच शत्रु आदिमें न होवै तो अच्छे रत्न, वस्त्र, भूषण मिलतेहैं ॥ १४ ॥

पाकेशादष्टमस्थस्य सौम्यस्यापहृतौ सुखम् ॥ भुक्त्यादौ शोभनं प्रोक्तमंते कष्टं विनिर्दिशेत् ॥ १५ ॥ पाकेशादष्टमस्थस्य पापस्यापहृतौ भयम् ॥ निधनं कुत्सितान्नं च चौराग्निनृपपीडनम् ॥ १६ ॥ दायेशान्नवमस्थस्य पापस्यापहृतौ यदा ॥ अशुभं लभते कर्मस्थानभ्रंशो मनोरुजम् ॥ १७ ॥ प्रधानतः शुभस्थस्य सौम्यस्यापहृतौ यदा ॥ विवाहं यज्ञदीक्षां च दानादीन् लभते नरः ॥ १८ ॥

दशेशसे अष्टमगत पापग्रहके अंतरमें आदिमें शुभफल सुख और अंतमें कष्टफल कहना ॥ १५ ॥ दशेशसे अष्टमगत पापग्रहके अंतरमें भय, मृत्यु, निन्द्य अन्न, चोर, अग्नि, राजासे भय मिले ॥ १६ ॥ दशेशसे नवमगत पापग्रहके अंतरमें अशुभकर्म पावै, स्थानहानि मानसी रोग होवै॥१७॥यदि वह नवमस्थ शुभग्रह होवै, तो विवाह यज्ञ दानादि मनुष्य पाताहै॥१८॥

कर्मस्थपापखेटस्य हृतौ पाकेश्वराद्यदा ॥ कर्मनाशमवाप्नोति दुष्कीर्तिं विविधापदम् ॥ १९ ॥ तस्मात्कर्मस्थसौम्यस्य हृतौ सौख्यं विनिर्दिशेत् ॥ तडागगोपुरादीनां पुण्यकर्मादिसंग्रहः ॥ २० ॥ लाभस्थस्य दशानाथात्पापस्यापहृतौ धनम् ॥ लभते पुत्रमित्रार्थस्थानप्राप्तिं च शाश्वतीम् ॥ २१ ॥ पाकेशाल्लाभयुक्तस्य सौम्यस्यापहृतौ सुखम् ॥ भाग्योत्तरं नृपात्प्रीतिं दारपुत्रादिवर्द्धनम् ॥ २२ ॥ व्ययस्थस्य हृतौ दुःखं पापस्य तु दशाधिपात् ॥ अर्थनाशं नृपात्क्रोधं स्थाननाशं स्मृतिभ्रमम् ॥ २३ ॥

पाकेश्वराद्व्ययस्थस्य सौम्यस्यापहृतौ यदा ॥ वाहनं भोगभाग्यं च वस्त्राभरणभूषणम् ॥ २४ ॥

दशेशसे दशमगत अंतरेश पापग्रहमें कर्मका नाश दुष्कीर्ति अनेक प्रकार आपत्ति पाताहै ॥ १९ ॥ दशेशसे दशमगत शुभग्रहके अंतरमे सौख्य तालाव नगर द्वार आदि पुण्य कर्मादियोंका संग्रह कहना ॥ २० ॥ दशेशसे लाभगत पापग्रहकी अंतर्दशामें धन पुत्र मित्रसे अर्थ पाताहै और नित्य स्थायी स्थानकी प्राप्ति होतीहै ॥ २१ ॥ दशेशसे लाभगत शुभग्रहके अंतरमें सुख ऐश्वर्यवृद्धि राजासे प्रसन्नता और स्त्री पुत्रादियोंकी वृद्धि होवे ॥ २२ ॥ दशेशसे व्ययगत पापग्रहके अंतरमें दुःख धननाश राजासे क्रोध स्थाननाश और यादगारीमें भ्रम ( भूल ) हो जातीहै ॥ २३ ॥ दशेशसे व्ययगत शुभग्रहके अंतरमें वाहन, भोग, ऐश्वर्य, वस्त्र, भूषण मिलतेहैं ॥ २४ ॥

तत्तद्दशायां संयोज्यमेवमेवं विशेषतः ॥ स्वर्क्षोच्चवर्गमित्रादि विना सर्वत्र कल्पयेत् ॥ २५ ॥ लग्नार्थभ्रोत्थगस्यापि पापस्यापहृतौ तदा॥पाकेशाद्दुःखमाप्नोति सौम्यभुक्तौ शुभं भवेत्॥ २६ ॥अंतर्दशायां क्रूरस्य क्रूरदाये महद्भयम् ॥ स्थानाक्षिबन्धुपुत्रार्थदारनाशं नृपाद्भयम् ॥ २७ ॥

इसप्रकार पापदशा पापांतरमें सर्वत्र विना स्वराशि उच्चवर्ग मित्रराशिगतके वही पापफल कल्पना- करने ॥ २५ ॥ लग्न द्वितीय तृतीयगत पापके अंतरमे दुःख शुभके अंतरमें शुभ होताहै ये फल दशेशसे लग्नादिगत अंतरेशके लिये हैं ॥ २६ ॥ क्रूरदशा क्रूरांतरमें बडी भय, स्थान, नेत्र, बंधु, पुत्र, धन, स्त्रीका नाश, राजासे भय होतीहै ॥ २७ ॥

शुभयुक्तौ शुभे दाये स्थानवाहनभूषणम् ॥ सौम्यभुक्तौ पापदाये त्वादौ सौख्यं परं भयम् ॥ २८ ॥ सौम्यदाये पापभुक्तौ त्वादौ कष्टं ततः शुभम् ॥शीर्षोदयर्क्षगाः खेटास्त्वादौ चान्ते नृऋक्षगाः ॥ २९ ॥ यत्र संपादबाहुल्यं योजयित्वा फलं वदेत् ॥ अपि संवादकार्येषु यथोक्तं फलमादिशेत् ॥ ३० ॥

शुभग्रहकी दशा शुभग्रहके अंतरमें स्थान, वाहन, भूषण मिलतेहैं, शुभग्रहकी दशा पापग्रहके अंतरमें प्रथम सुख पीछे भय मिलतीहै ॥ २८ ॥ शुभग्रहकी दशा पापके अंतरमें प्रथम कष्ट पीछे सुख होताहै, शीर्षोदयराशिगत ग्रह प्रथम अन्यराशियोंके अंतमें शुभ फल देतेहैं ॥ २९ ॥ जहां शुभफल देनेवाले तथा अशुभवालेभी बहुतहों तहां बलाबल योजना करके फल कहना तुल्यतामें यथोक्त फल कहना ॥ ३० ॥ इति सामुदायिकांतर्दशाफलम् ॥

अथ ग्रहाणां लग्नादिस्थितभेदेन पुनरप्यं-
तर्दशाफलविशेषमाह ।

लग्नगस्य रवेः पाके भौमार्किशिखिभोगिनाम् ॥ अंतर्दशायां दुःखं च राज्यार्थगृहनाशनम् ॥ १ ॥ तेषामगोचरस्थानां दिनेशात्फलमीदृशम् ॥ गोचरस्थे फलं सौख्यं सर्वस्मिन् पाकपाक्गृहे ॥ २ ॥ "गोचरत्वं नाम" स्वर्क्षतुंगत्रिकोणस्थः षडष्टांत्यविवर्जितः ॥ अनस्तगो मित्रगस्तु गोचरस्थो भवेद्ग्रहः ॥३॥ अस्तगो नीचगो वापि स्वर्क्षमूलविवर्जितः ॥ षष्ठाष्टमव्ययस्थो वा यः खेटो यमगोचरः ॥ ४ ॥

लग्नगत सूर्यकी दशा मंगल, शनि, केतु, राहुकी अंतर्दशामें दुःख और राज्य, धन, घरका नाश होताहै ॥ १ ॥ यदि वे ग्रह सूर्यसे अगोचरमें होवैं, तब ऐसा फलहै, गोचरमें होवें तो सौख्य फल देतेहैं यह सभी दशेशसे सभी स्थानोंमें करना ॥ २ ॥ गोचर अगोचर संज्ञा कहतेहैं कि अपने राशि उच्च मूल त्रिकोणगत ग्रह ६।८।१२ भावोंसे अन्यमें हों मित्रराशिमें हों अस्तंगत न हों वह गोचरस्थ कहातेहैं ॥ ३ ॥ अस्तंगत नीचगत अथवा स्वराशि मूल त्रिकोण रहित ६।८।१२ भावस्थित जो ग्रह हों वह अगोचरस्थ कहातेहैं ॥ ४ ॥

लग्नस्थवासरेशस्य दशायामिज्यशुक्रयोः ॥ शशांकसौम्ययोर्भुक्तौ कृषिगोसुतदारभूः ॥ ५ ॥ धनस्थवासरेशस्य पापभुक्तौ धनक्षयम् ॥ वाक्पारुष्यं मनोदुःखं नेत्ररोगं महद्भयम् ॥ ६ ॥ सौम्यभुक्तौ रवेः पाके धनस्थस्य महत्सुखम् ॥ विद्यालाभं नृपात्प्रीतिं वस्त्रवाहनभूषणम् ॥ ७ ॥ तृतीयस्थस्य तु रवेः पाके पापहृतौ यदा ॥ गोचरस्थे महत्सौख्यं नोचेत्पापफलं वदेत् ॥ ८ ॥

लग्नगत सूर्यकी दशामें गुरु शुक्रकी तथा चंद्रमा बुधकी अंतर्दशामें कृषि, गौ, पुत्र, स्त्री, भूमि मिलते हैं ॥ ५ ॥ धनस्थानगत सूर्यकी दशामें पापांतरमें धनक्षय वाणीकी कठोरता मानसी दुःख नेत्ररोग बडी भय होतीहै ॥ ६ ॥ धनस्थ सूर्यदशा शुभग्रहके अंतरमें बडा सुख, विद्यालाभ, राजकृपा, वस्त्र, सवारी और भूषण मिलतेहैं ॥ ७ ॥ तीसरे सूर्यकी दशा पापांतरमें गोचरमें होवे तो शुभ अन्यथा अशुभ फल कहना ॥ ८ ॥

तत्रस्थभानुपाके च शुभयुक्तौ महत्सुखम् ॥ धैर्यं वित्तं सुतार्तिं च समरे जयमाप्नुयात् ॥ ९ ॥ दिनेशस्य सुखस्थस्य दशायां पापिनां हृतौ ॥ मातृनाशं मनोदुःखं चौराग्निनृपपीडनम् ॥१०॥

रवेः सुखस्थितस्यापि शुभभुक्तौ महत्सुखम्॥ राज्यार्थपुत्रदारादि वस्त्रमाल्यानुलेपनम् ॥ ११ ॥ पंचमस्थरवेः पाके शन्यारशिखि भोगिनाम् ॥ अंतर्दशायां पुत्रार्तिं चौरभूपाग्निपीडनम् ॥ १२ ॥ शुभग्रहाणां भुक्तौ च रवेः पंचमगस्य तु ॥ परिपाके सुतार्तिं च राज्यवाहनभूषणम् ॥ १३ ॥

-तृतीयस्थ सूर्यकी दशा शुभग्रहोंके अंतरमें बडा सुख मिले धैर्यता, धन, पुत्रप्राप्ति और युद्धमें जय पावताहै ॥ ९ ॥ चतुर्थगत सूर्यकी दशा पापग्रहांतरमें माताका नाश मनमें दुःख चोर, अग्नि, राजासे पीडन मिलताहै ॥ १० ॥ चतुर्थगत सूर्यदशा शुभग्रहोंके अंतरमें राज्य धन, पुत्र, स्त्री आदि तथा वस्त्र, सुगंधितपुष्प, चंदनादि मिलतेहैं ॥ ११ ॥ पंचमगत सूर्यकी दशा शनि, मंगल राहु, केतुके अंतरमे पुत्रपीडा चोर, राजा, अग्निसे पीडा मिले ॥ १२ ॥ पंचम रविदशा शुभग्रहांतरमे पुत्रप्राप्ति राज्य वाहन भूषणोंकी प्राप्ति होतीहै॥१३॥

षष्ठस्थसूर्यदायेऽस्मिन् पापदाहृतिपापिनाम् ॥ ऋणचौराग्निभूपैस्तु भीतिरावश्यकी तथा ॥ १४ ॥ सौम्यानामपहारे तु भास्करस्यारिगस्य च ॥ परिपाके सुखं पूर्वं पश्चाद्रिष्टं विनिर्दिशेत् ॥ १५ ॥ सप्तमस्थरवेः पाके शुक्रेज्याब्जविदां हृतौ ॥ दारलाभं मनोत्साहं यानांबरविभूषणम् ॥ १६ ॥ तथाविधरवेः पाके दुःखं स्यात्पापिनां हृतौ ॥ ज्वरातिसारं पित्तं च मेहकृच्छ्रारिपीडनम् ॥ १७ ॥

छठे सूर्यकी दशा पापग्रहोंके अंतरमें ऋण, चोर, अग्नि, राजासे भय, अवश्य देतीहै तथा यह दशा पापभी देतीहै ॥ १४ ॥ ऐसे सूर्यमें शुभग्रहके अंतर पहिले सुख पीछे कष्ट देतेहैं कहना ॥ १५ ॥ सप्तम सूर्यकी दशा शुक्र, गुरु, चंद्रमा, बुधके अंतरमें स्त्रीलाभ मनका उत्साह सवारी, वस्त्र भूषण मिलतेहैं ॥ १६ ॥ ऐसे सूर्यकी दशा पापग्रहोंके अंतरमें ज्वर, अतिसार, पित्तप्रमेह, मूत्रकृच्छ्रादि पीडन मिलताहै ॥ १७ ॥

अष्टमस्थरवेः पाके शुभभुक्तौ शुभं वदेत् ॥ किंचिद्दुःखं शुभाधिक्यं शयनांबरभूषणम् ॥ १८ ॥ तथाविधरवेर्दाये पापभुक्तौ महद्भयम् ॥ मरणं व्याधिपीडा वा ॥ परप्रेष्यत्वमेव वा ॥१९॥ शुभस्थानगतस्यापि रवेः पाके हृतौ यदा ॥ सौम्यानां शुभकर्माणि दानयज्ञं महोत्सवम् ॥ २० ॥ नवमस्थरवेः पाके पापभुक्तौ यदा तदा ॥ करोति दुःखबाहुल्यं गुरुपित्रादिपीडनम्॥२१॥

अष्टमगत सूर्यकी दशा शुभग्रहोंके अंतरमें शुभफल कहना थोडा दुःख शुभफळ अधिक तथा शय्या वस्त्र भूषण मिलतेहै ॥ १८ ॥ ऐसेही सूर्यकी दशा पापांतरमें बडी भय वा मरण चद्वा रोगपीडा और पराया दौत्यकाम मिळताहै ॥ १९ ॥ नवमगत सूर्यकी दशा शुभग्रहोंके अतरमें शुभकर्मकी प्राप्ति दान यज्ञ बडे उत्सवादि करने मिळतेहैं ॥ २० ॥ नवम सूर्यदशा पापांतरमें दुःखकी बाहुल्यता गुरु पिता आदियोंको पीडन मिळताहै ॥ २१ ॥

कर्मस्थरविदाये तु पापभुक्तिर्यदा तदा ॥ करोति कर्मशोकार्तिं चोराग्निनृपपीडनम् ॥ २२ ॥ तथाविधरवेः पाके शुभभुक्तिर्यदा तदा ॥ करोति विपुलं राज्यं कीर्तिश्चाचंद्रतारकम् ॥ २३ ॥ लाभराशिगतस्यापि रवेः पाके शुभेतरा ॥ भुक्तिर्यदा तदा दुःखं पश्चात्सौख्यं करोति च ॥ २४ ॥ तथाविधरवेः पाके शुभभुक्तिर्यदा तदा ॥ धनार्तिं राजसंमानं दारपुत्रनृपात्प्रियम् ॥ २५ ॥ द्वादशस्थरवेः पाके पापभुक्तौ महद्भयम् ॥ स्थानच्युतिं प्रवासं च नृपकोपाद्विमानता ॥२६॥ तथाविधरवेः पाके शुभभुक्तौ महत्सुखम् ॥ गोभूमिवस्त्रधान्यादिमणिविद्रुमभूषणम् ॥ २७ ॥ इति रविपाकान्तर्दशाफलम् ॥

दशमगत सूर्यदशा पापांतर जब होवै तब शोकके कर्म करातीहै पीडा चोर अग्नि राजासे पीडन मिळताहै ॥ २२ ॥ ऐसेही सूर्यदशा शुभांतरमे बडाराज्य और जहांपर्यंत चद्रमा तारागणहै तहांलो कीर्ति बढातीहै ॥ २३ ॥ लाभगत सूर्यदशा अशुभग्रहोंके अतरमें दुःख भोगके पीछे सुखभी करतीहै ॥ २४ ॥ ऐसेही सूर्यदशा शुभांतर जब आवै तब धनप्राप्ति राजासे संमान स्त्री पुत्र तथा राजासे शुभत्व होवै ॥ २५ ॥ बारहवें सूर्यकी दशा पापांतरमें बडी भय स्थानहानि परदेशगमन और राजकोपसे मानहानि होवै ॥ २६ ॥ ऐसेही सूर्यकी दशा शुभग्रहोके अतरमें बडासुख मिळे गो, भूमि, वस्त्र, अन्नादि, मणि, मूंगायुक्त भूषण मिळते हैं ॥ २७ ॥ इति रविपाकान्तर्दशाफलम् ॥

## अथ चंद्रदशायामन्तर्दशामाह ।

मूर्तिस्थचन्द्रदाये तु शुक्रेज्याब्जविदां हृतौ ॥ देहारोग्यं नृपात्प्रीतिं वाहनांबरभूषणम् ॥ १ ॥ तथाविधस्य चाब्जस्य परिपाके शुभेतरा ॥ हृतिः करोति दुःखं च कृषिगोभूमिनाशनम् ॥ २ ॥ द्वितीयस्थनिशानाथपरिपाके शुभेतरा ॥ कलत्रपुत्रवं-

धूनां नृपाद्भीतिं करोति च ॥ ३ ॥ सौम्याहतौ द्वितीयस्थचंद्रदाये महत्सुखम् ॥ भोजनांबरपानं च मनोत्साहं करोति च ॥४॥

लग्नगत चंद्रदशा शुक्र, गुरु, चंद्र, बुधके अंतरमें देहमें निरोगिता, राजासे प्रसन्नता तथा वाहन वस्त्र भूषण मिलतेहैं ॥ १ ॥ ऐसे चन्द्रमाकी दशा पापग्रहोंके अंतरमें दुःख, कृषि, गो, भूमिका नाश करतीहै ॥ २ ॥ दूसरे चंद्रमाकी दशा पापग्रहोंके अंतरमें स्त्री, पुत्र, बंधुजनको, कष्ट, राजासे भय करतीहै ॥ ३ ॥ दूसरे चंद्रकी दशा शुभग्रहोंके अंतरमें बडासुख भोजन, वस्त्र, पान और मनका उत्साह करतीहै ॥ ४ ॥

तृतीयस्थनिशानाथपरिपाके महत्सुखम् ॥ शुभग्रहाणां भुक्तिस्तु करोति नृपमान्यताम् ॥ ५ ॥ तथाविधनिशानाथपरिपाके शुभेतरा ॥ हृतिः करोति वैकल्यं भ्रातृधैर्यविनाशनम् ॥ ६ ॥ चतुर्थस्थनिशानाथपरिपाके महत्सुखम् ॥ शुभभुक्तौ नृपात्प्रीतिर्जायते गृहजं सुखम् ॥ ७ ॥ पापभुक्तौ महत्कष्टं गृहदारार्थनाशनम् ॥ चौराग्निनृपभीतिं च तादृगब्जदशांतरे ॥ ८ ॥

तीसरे चन्द्रमाकी दशा शुभांतरमें बडासुख तथा राजमान करतीहै ॥ ५ ॥ पापांतरमें विकलता भाई तथा धैर्यका नाश करतीहै ॥ ६ ॥ चौथे चंद्रमाकी दशा शुभग्रहोंके अंतरमें बडासुख राजासे हर्ष घरका सुख देतीहै ॥ ७ ॥ चौथे चंद्रमाकी दशा पापग्रहोंके अंतरमें मकान स्त्री, धनका, नाश, चोर, अग्नि, राजासे भय देतीहै ॥ ८ ॥

पंचमस्थनिशानाथपरिपाके महत्सुखम् ॥ सौम्यभुक्तौ कलत्रार्थपुत्रमित्रांबराणि च ॥ ९ ॥ तथाविधदशानाथदाये पापहृतौ यदा॥ बुद्धिक्षोभं मनस्तापं पुत्रदारनृपाद्भयम् ॥ १० ॥ कृषिनाशमृणग्रस्तं षष्ठस्थितनिशाकरात् ॥ स्यात्पापिनां हृतौ दुःखं प्रमेहक्षयपाण्डुभिः ॥११॥ रिपुस्थितदशानाथे सौम्यानां तु यदा हृतिः॥ करोति सर्वतो मैत्रीं चौराग्निभयनाशनम् ॥ १२ ॥

पंचमचंद्रमाकी दशा शुभग्रहोंके अंतरमें बहुतसुख, स्त्री, धन, पुत्र, मित्र और वस्त्रभी देतीहै ॥ ९ ॥ ऐसे चंद्रदशा पापांतरमें बुद्धिमें क्षोभ ( भय ) मनमें संताप, पुत्र, स्त्री, राजासे भय देतीहै ॥ १० ॥ छठे चंद्रमाकी दशा पापांतरमें कृषिका नाश ऋणसे दबना, प्रमेह, क्षय, पाण्डुरोगसे दुःख देतीहै ॥ ११ ॥ षष्ठस्थचंद्रदशा शुभांतरदशा सबसे मैत्री तथा चोर, अग्नि, राजभयका नाश करती है ॥ १२ ॥

कलत्रस्थनिशानाथाद्यदा सौम्याहृतिस्तदा॥ कलत्रपुत्रसंपत्तिर्वाहनांबरभूषणम् ॥ १३ ॥ तथाविधदशानाथात्पापिनां तु हृतिर्यदा ॥ विदेशयानं पुत्रार्थदारबंधुविनाशनम्॥ १४ ॥ अष्टमस्थनिशानाथात्पापभुक्तौ महद्भयम् ॥ मरणं दारपुत्राणां कुत्सितान्नं पराजयम् ॥ १५ ॥ रंध्रस्थितनिशानाथपरिपाके महत्सुखम् ॥ सौम्यभुक्तौ महत्कीर्तिर्धैर्यवाहनभूषणम् ॥ १६ ॥

सप्तम चंद्रमासे जब शुभांतरआवै तब स्त्री, पुत्र, संपत्ति, वाहन, वस्त्र, भूषण मिलतेहैं ॥ १३ ॥ ऐसे चंद्रमासे जब पापांतरदशा होवै तब परदेशगमन, पुत्र, धन, स्त्री, बंधुजनका विनाश होवै ॥ १४ ॥ अष्टमचंद्रमासे पापांतरमें बडीभय, स्त्री, पुत्र, मरण, निन्द्य अन्नका भोजन और युद्धादिमें पराजय, (हार) पावै ॥ १५ ॥ अष्टम चंद्रदशा शुभांतरमें बडासुख, बडीकीर्ति होवै, धैर्यता तथा वाहन, भूषण मिलें ॥ १६ ॥

धर्मस्थितदशानाथाच्छुभभुक्तौ पितुः सुखम् ॥ धर्मं यज्ञं विवाहं च राज्यस्त्रीधनसंपदः ॥ १७ ॥ तथाविधदशानाथात्पापिनां तु हृतिर्यदा ॥ धर्महानिर्मनोदुःखं राज्यार्थगृहनाशनम् ॥ १८ ॥ कर्मस्थचन्द्रदाये च सौम्यभुक्तिः करोति हि ॥ स्वकर्मनिरतं शास्त्र धर्मदानपरायणम् ॥ १९॥ कर्मस्थितनिशानाथात्पापभुक्तिर्यदा तदा ॥ कर्मनाशं करोत्यत्र ह्यपकीर्तिं महद्भयम् ॥ २० ॥

नवमगत दशेश चंद्रमासे शुभांतरमे पिताका सुख, धर्म, यज्ञ, विवाहादि, तथा राज्य, स्त्री, धनकी संपत्ति होवै ॥ १७ ॥ ऐसे चंद्रमादशा पापांतर जब आवै तब धर्महानि, मनमे दुःख राज्य, धन, गृह, नाश होवैं ॥ १८ ॥ दशमगत चंद्रमाकी दशामें शुभग्रहोंकी अंतरदशा अपने कर्ममे तत्पर, धर्मशास्त्र, तथा दानमें तत्पर करतीहै ॥ १९ ॥ दशम चंद्रदशासे पापांतर जब आवै तब कर्मनाश, अपयश, औरबडीभय करतीहै ॥ २० ॥

लाभचन्द्रदशाभुक्तिर्धनधान्यांबराणि च ॥ वाहनं राज्यलाभं च करोति विविधं सुखम् ॥ २१ ॥ लाभचन्द्रे पापभुक्तौ धननाशमुपैति च ॥ कृषिधान्याक्षिदेहार्तिं नृपचौरादिपीडनम् ॥ ॥ २२ ॥ द्वादशस्थनिशानाथपरिपाकेऽर्थनाशनम् ॥ पापभुक्तौमहत्कष्टं सर्वशत्रुत्वमेव च ॥ २३ ॥ शुभभुक्तौ व्ययस्थस्य वस्त्रमाल्यविभूषणम् ॥ दारार्थपुत्रमित्राणां वर्धनं वाहनं सुखम्॥२४॥ इति चंद्रपाकान्तर्दशाफलम् ॥

लाभगत चंद्रदशामें शुभांतर धन, अन्न, वस्त्र, वाहन, राज्यलाभ और अनेकप्रकार सुख करताहै ॥ २१ ॥ लाभगत चंद्रदशामें पापांतरदशा धननाश, कृषि, अन्न क्षय, नेत्र, तथा देहपीडा, राजा, चोर, अग्निसे पीडन देतीहै ॥ २२ ॥ द्वादशचंद्रमाकी दशा पापांतरमें बडा कष्ट मिलताहै तथा सर्वत्र शत्रुता होतीहै ॥ २३ ॥ व्ययगत चंद्रदशा शुभांतरमें स्त्री, धन, पुत्र, मित्रोंकी वृद्धि, वाहनलाभ और सुख मिलतेहैं ॥ २४ ॥ इति चंद्रपाकान्तर्दशाफलम् ॥

## अथ भौमदशांतरफलानि ।

लग्नस्थितधरासूनोः परिपाके व्रणं क्षतम् ॥ पापभुक्तौ महत्कष्टमजीर्णादिमहद्भयम् ॥ १ ॥ शुभभुक्तौ नृपात्प्रीतिं भ्रातृवर्गभवं सुखम् ॥ तथाविधधरासूनोर्दशायां क्षेत्रवाहने ॥ २ ॥ धनस्थितधरासूनोः शुभभुक्तिर्यदा तदा ॥ भ्रातृसौख्यं मनोत्साहं विद्यावाहनभूषणम् ॥ ३ ॥ द्वितीयस्थधरासूनोः परिपाके शुभाहतिः ॥ पूर्ववित्तविनाशं च राजकोपं ज्वराग्निभीः ॥ ४ ॥

लग्नगत भौमकी दशा पापग्रहोंके अंतरमें व्रण घावसे बडा कष्ट अजीर्ण आदिसे बडे भय होवैं ॥ १ ॥ ऐसे भौमदशा शुभांतरमें राजासे प्रसन्नता, भ्रातृवर्गसे सुख और खेती, तथा वाहन मिलतेहैं ॥ २ ॥ दूसरे मंगलकी दशामें शुभग्रहोंका अंतर जब होवै तब भाइयोंका सुख, मनका उत्साह, विद्या, वाहन, भूषण मिलतेहैं ॥ ३ ॥ द्वितीय मंगलकी दशा शुभांतरमें पहिलेका संचित धन नाश, राजकोप, ज्वर, अग्निभय होवै ॥ ४ ॥

तृतीयस्थधरासूनोः पापभुक्तिर्यदा तदा ॥ मनोवैकल्यमायाति भ्रातृवर्गविनाशनम् ॥ ५ ॥ तृतीयस्थधरासूनोः पाके सौम्यहतिर्यदा ॥ भोजनांबरसौख्यं च कृषिभूषणवाहनम् ॥ ६ ॥ हिबुकस्थधरासूनोः क्रूरभुक्तौ महद्भयम् ॥ गृहक्षेत्रविनाशं च नृपचोराग्निपीडनम् ॥ ७ ॥ हिबुकस्थधरासूनोः पाके सौम्यहतिर्यदा ॥ क्षेत्रांबरसुखावाप्तिं पशुवाहनभूषणम् ॥ ८ ॥

तीसरे मंगलकी दशा पापांतरमें मनकी विकलता होवै भ्रातृपक्षका विनाश होवै ॥ ५ ॥ तृतीय मंगलकी दशा शुभांतरमें भोजन, वस्त्र, सुख, कृषि, वाहन, भूषण, मिलें ॥ ६ ॥ चौथे मंगलकी दशा पापांतरमें बडा भय, गृह, खेतीका विनाश, राजा, चोर, अग्निसे पीडन मिले ॥ ७ ॥ चौथे भौमकी दशामें शुभग्रहोंके अंतरमें खेती, वस्त्रके सुखकी प्राप्ति, पशु, वाहन और भूषणभी मिलतेहैं ॥ ८ ॥

पंचमस्थधरासूनोः पाके पापहतिर्यदा ॥ कृषिगोधनधान्यार्थसुतदारविनाशनम् ॥ ९ ॥ तथाविधकुजात्सौम्यभुक्तौ शोभन-

मा॥दिशेत् ॥ राजपूज्यं सुताप्तिं च मंत्राप्तिमिहादिशेत् ॥ १० ॥ षष्ठस्थितकुजात्पापभुक्तौ कष्टं विनिर्दिशेत् ॥ चौराग्निनृपपीडां च स्फोटकक्षयमेहनम् ॥ ११ ॥ तथाविधकुजात्सौम्यभुक्तौ भूपालमित्रताम्॥बन्धुनाशं मनोदुःखं पश्चात्सौख्यं विनिर्दिशेत्॥१२॥

पंचम मंगल दशामें पापांतर जब होवे तब कृषि, गो, धन, अन्न, पुत्र, स्त्रीका विनाश होवे ॥ ९ ॥ ऐसे मंगलमें शुभांतर जब आवे तब शुभफल कहना राजासे पूज्यता, पुत्रप्राप्ति और मंत्रप्राप्ति कहनी ॥ १० ॥ छठे मंगलकी दशा पापांतरमें कष्ट कहना, चोर, अग्नि, राजासे पीडा, विस्फोटक, क्षय, मेह रोगभी होतेहैं ॥ ११ ॥ छठे मंगलदशा शुभांतरमें राजासे मित्रता, बन्धुनाश, मनमें दुःख और पीछे सुखभी कहना ॥ १२ ॥

कलत्रस्थकुजात्पापभुक्तौ स्त्रीसुतराजभीः ॥ शुभभुक्तौ महत्सौख्यं नृपवाहनभूषणम् ॥ १३ ॥ अष्टमस्थकुजाद्भुक्तौ पापिनां मरणं कृशम् ॥ सौम्यभुक्तौ महत्सौख्यं कृषिगोनृपपूजनम् ॥ १४ ॥ नवमस्थधरासूनोर्दाये पापहृतिर्यदा ॥ पित्रोर्नाशं गुरोर्नाशं धर्महानिं मनोरुजम् ॥ १५ ॥ तथाविधकुजात्सौम्यभुक्तौ गोधनसंपदः ॥ विवाहं यज्ञदीक्षां च देवभूसुरतर्पणम् ॥ १६ ॥

सप्तम मंगलकी दशा पापांतरमें स्त्री, पुत्र, राजासे भय शुभान्तरमें बडा सुख राजासे वाहन, भूषण मिलें ॥ १३ ॥ अष्टम मंगलकी दशा पापांतरमें अल्पमृत्यु, कृशता और शुभग्रहोंके अंतरमें बडासुख, कृषि, गौ लाभ, राजासे पूजन, मिलतेहैं ॥ १४ ॥ नवम गत मंगलकी दशामें पापांतर जब होवे तबमातापिताका नाश, गुरुका नाश, धर्मकी हानि, मनमें रोग होतेहैं ॥ १५ ॥ ऐसे मंगलकी दशा शुभांतरमें गोधनकी संपत्ति, विवाह, यज्ञकी दीक्षा, देवता ब्राह्मणोंकी तृप्ति, करनी मिलें ॥ १६ ॥

कर्मस्थितधरासूनोर्दुःखं स्यात्पापिनां हृतौ ॥ विदेशयानं दुष्कीर्तिं लभते हि पराजयम् ॥ १७ ॥ लाभस्थभूमिपुत्रस्य पाके पापहृतिर्यदा ॥ करोति विपुलं राज्यं गंधमाल्यादिभूषणम् ॥ १८ ॥ शुक्रेज्याब्जविदां भुक्तौ लाभराशिगतस्य तु ॥ परिपाके महत्सौख्यं दानधर्मादिसंग्रहम्॥ १९ ॥द्वादशस्थधरासूनोः पाके पापहृतिर्यदा ॥ करोति दुःखबाहुल्यं कारागृहनिवेशनम् ॥२०॥शुभापहारे सौख्यं च यानांवरविभूषणम् ॥ भुक्त्यंते राजकोपं च पदभ्रंशं मनोरुजम्॥२१॥इति भौमपाकान्तर्दशाफलम् ॥

दशम मंगलकी दशामें जब पापांतर होवै तब विदेशगमन, अपकीर्ति, पराजय (हार) पावताहै ॥ १७ ॥ लाभगत मंगलकी दशामें जब पापांतर आवै तब बहुतबडा राज्य, चंदन, पुष्प और भूषण मिलतेहैं ॥ १८ ॥ लाभगत मंगलमें शुक्र, गुरु, चंद्र, बुधकी अंतरदशा जब आवै तब बडासुख, दान, धर्म आदिका संग्रह होताहै ॥ १९ ॥ व्ययस्थ मंगलकी दशामें जब पापांतर आवै तब बहुतदुःख और कैद घरमें प्रवेश करताहै ॥ २० ॥ शुभग्रहोंके अंतरमें सुख, सवारी, वस्त्र, भूषण मिलतेहैं, दशाके अंतमें राजाका कोप पदसे च्युति और मानसी रोग होतेहैं ॥ २१ ॥ इति भौमपाकान्तर्दशाफलम् ॥

### अथ राहुदशांतरफलानि ।

लग्नस्थसैंहिकेयस्य दाये पापहृतिर्यदा ॥ करोति दुःखबाहुल्यं नृपचौराग्निपीडनम् ॥ १ ॥ तत्रस्थभोगिनः पाके शुभभुक्तौ शुभं वदेत् ॥ गृहक्षेत्रादिवृद्धिश्च भोजनांबरभूषणम् ॥ २ ॥ षडष्टांत्यगतस्याहेः परिपाके शुभेतरा ॥ हृतिः कलहरोगाग्निनृपचौरविषाहिभीः ॥ ३ ॥ श्वासक्षयप्रमेहादिशूलनिद्रादिभाग्भवेत् ॥ कुभोजनं कुवस्त्रं च स्थाननाशं नृपाद्भयम् ॥ ४ ॥

लग्नगत राहुकी दशामें पापांतर जब आवै तब बहुत दुःख तथा नृप, चौर, अग्निसे पीडन करतीहै ॥ १ ॥ लग्नगत राहुकी दशा शुभांतरमें शुभफल कहना घर, खेतीकी वृद्धि, भोजन, वस्त्र, भूषणवृद्धि, होतीहै ॥ २ ॥ छठे, आठवें, बारहवें, भावगत राहुकी दशामें पापांतर जब हों तब कलह, रोग, अग्नि, राजा, चोर, विष, सर्पसे भय होतीहै ॥ ३ ॥ तथा श्वास, क्षय, प्रमेहादि शूल, निद्रा आदिवाला होवै कुभोजन, कुवस्त्र मिलें, स्थानका नाश होवै राजासे भय होवै ॥ ४ ॥

दुःस्थस्य चाहिनाथस्य परिपाके शुभा हृतिः ॥ आदौ शुभं महत्सौख्यं नृपमानं धनागमम् ॥ ५ ॥ अंते तु राजभीतिः स्यात्स्थाननाशं मनोरुजम् ॥ कृषिगोभूमिवस्त्रादिबंधुपुत्रार्थनाशनम् ॥ ६ ॥

दुष्टभावगत राहुकी दशामें जब शुभग्रहोंके अंतर आवें तब प्रथम शुभफल, बडासौख्य, राजमान, धनागम होवै ॥ ५ ॥ अंतमें तो राजासे भय, स्थानका नाश, मनमें रोग, कृषि, गौ, भूमि, वस्त्रादि तथा बंधुजन, पुत्र, धनका नाश होवै ॥ ६ ॥

केन्द्रत्रयस्थितस्याहेः पापानां तु हृतिर्यदा ॥ गृहदाहाक्षिरोगादिदारपुत्रमहद्भयम् ॥ ७ ॥ स्थानच्युतिं मनोदुःखं निजाचारविवर्जितम् ॥ अकस्मात्कलहं चैव चौराग्निनृपपीडनम् ॥ ८ ॥ चतु-

पृथगतस्याहेः परिपाके शुभा इतिः ॥ क्वचित्सौख्यं क्वचित्कीर्तिं क्वचिद्धर्मं क्वचिन्न हि ॥ ९ ॥ एवमादौ तु भुक्त्यंते राजकोपाद्धन-क्षयम् ॥ युद्धे पराजयं चैव विद्यावादं महद्भयम् ॥ १० ॥

लग्नसे अतिरिक्त तीन केन्द्रोंमेंसे किसीमें स्थित राहुकी दशामें जब पापांतर आवै तब घर जले, नेत्ररोगादि होवें, स्त्रीपुत्रोंको बडी भय होवै ॥ ७ ॥ स्थानहानि, मनमें दुःख, अपने आचारसे वर्जितता अकस्मात्कलह, तथा चोर, अग्नि, राजासे पीडन मिले ॥ ८ ॥ केन्द्रगत राहुदशामें शुभांतरका फल कभी सुख, कभी कीर्ति, कभी धर्म कभी न होवै ॥ ९ ॥ ऐसे फल दशादिमें होतेहैं दशाके अंत्यमें राजाके कोपसे धनका क्षय, युद्धमें पराजय, विद्यासंबंधी वाद और बडी भय होतीहै ॥ १० ॥

त्रिकोणस्थफणीन्द्रस्य दशापाके महत्कृशम् ॥ पापभुक्तौ महत्कष्टं पापाचारसमन्वितम् ॥ ११ ॥ अपकीर्तिं कुभोज्यं च कृषिगोभूमिनाशनम् ॥ नृपभीतिं च शौर्यं च मौल्यादिपतनं भवेत् ॥ १२ ॥ तथाविधफणीन्द्रस्य शुभभुक्तौ शुभक्रिया ॥ सुतदारधनाप्तिं च भुक्त्यंते फलमीदृशम् ॥ १३ ॥ किंचित्सुखं तदादौ तु विदेशगमनं तथा ॥ मंत्रोपास्ति मनोत्साहं कलत्रात्मजदूषणम् ॥ १४ ॥

त्रिकोण ५।९ गत राहुकी दशा पापांतरमें बहुत कृशत्व, महाकष्ट, पापाचारसहित होवै ॥ ११ ॥ अपकीर्ति, कुभोजन मिले कृषि गौ भूमिका नाश राजासे भय, तथा पराक्रम करना मिले परंतु मौल्य आदिका पतन होवै अर्थात् कीमत ( करामत ) घटजावै ॥ १२ ॥ त्रिकोणगत राहुमें जब शुभांतर होवै तब शुभकाम होवैं, पुत्र स्त्री धन प्राप्ति होवै, ऐसे फल दशाके अंतमें होतेहैं ॥ १३ ॥ दशादिमें तो थोडासुख तथा परदेश गमन मंत्रोपासना, मनका उत्साह, और स्त्रीपुत्रोंको दूषण मिले ॥ १४ ॥

तृतीयलाभगस्याहेः परिपाके महत्सुखम् ॥ पापभुक्तौ नृपप्रीतिं फलमीदृशमादितः ॥ १५ ॥ अंते कष्टं विनिर्देश्यं चौराग्निनृपपीडनम् ॥ बन्धुद्वेषं मनोदुःखं भ्रातृवर्गविनाशनम् ॥ १६ ॥ धनराशिगतस्याहेः पापानां तु इतिर्यदा ॥ धननाशं मनोदुःखं भार्यापुत्रविनाशनम् ॥ १७ ॥ क्रयविक्रयवित्ताप्तिं वाग्दूषणमथापि वा ॥ तथाविधफणीन्द्रस्य शुभभुक्तौ तु भोजनम् ॥ १८ ॥

वस्त्रवाहनभूपाप्तिं क्रयविक्रयदूषणम् ॥उद्योगभंगं देहार्तिं गूढपापं लभेन्नरः ॥ १९ ॥ इति राहुपाकान्तर्दशाफलम् ॥

तीसरे वा ग्यारहवें राहुकी दशा पापांतरमें बडा सुख मिले; राजाकी प्रसन्नता होवै, ऐसे फल प्रथम मिलें ॥ १५ ॥ दशाके अंतमें कष्ट कहना तथा चोर, अग्नि, राजासे भय, बंधुजनसे वैर, मनमें दुःख भाइयोंका नाश होताहै ॥ १६ ॥ धनराशिगत राहुदशा पापांतरमें धननाश, मनमें दुःख, स्त्री पुत्र नाश ॥ १७ ॥ व्यापारमें धनहानि वा वाणीसे दूषण मिलतेहैं धनके राहुदशा शुभांतरमें उत्तम भोजन ॥ १८ ॥ वस्त्र, वाहन, भूषणोंकी प्राप्ति, व्यापारमें दूषण, उद्यमभंग, देहपीडा, तथा गुप्तपाप मनुष्य पावै ॥ १९ ॥ इति राहुपाकान्तर्दशाफलम् ॥

## अथ जीवान्तर्दशाफलम् ।

केन्द्रस्थितस्य जीवस्य दशायां देहपीडनम् ॥ पापाहतौ तथा दुःखं राजकोपं धनक्षयम् ॥ १ ॥ कृषिगोभूमिनाशं च विरोधं बंधुभिः सह ॥ उत्साहभंगं वैकल्यमादौ चांते शुभं वदेत् ॥ २ ॥ भुक्तौ शुभानां तत्काले गुरोः केन्द्रगतस्य तु ॥ राज्यलाभं मनोत्साहं वस्त्रवाहनभूषणम् ॥ ३ ॥ दानं होमं जपं धर्म्यं नृपलालनमानताम् ॥ सर्वोपकारं कल्याणं विचित्रांबरकाञ्चनम् ॥ ४ ॥

अथ बृहस्पतिकी अन्तर्दशाका फल कहतेहैं केन्द्रगतगुरुकी दशा पापांतर्दशामें देहपीडा, तथा दुःख राजाका कोप, धनक्षय ॥ १ ॥ कृषि, गौ, भूमिका नाश, बंधुजनोंसे विरोध, उत्साहभंग, विकलता, इतने फल प्रथम होनेहैं दशांतमें शुभफल कहना ॥ २ ॥ केन्द्रगत गुरुदशा शुभग्रहोंके अंतरमें राज्यलाभ, मनका उत्साह, वस्त्र, वाहन, भूषण मिलतेहैं ॥ ३ ॥ दान, हवन, जपादि धर्म होतेहैं राजासे प्यार, एवं मान मिलताहै सबका उपकार होताहै मंगलकार्य होतेहैं नानाप्रकारके वस्त्र एवं सुवर्ण मिलताहै ॥ ४ ॥

त्रिकोणस्थगुरोः पाके शुभभुक्तौ महत्सुखम्॥प्राकारगोपुरादीनां निर्माणं देवतर्पणम् ॥ ५ ॥ भाग्योत्तरं महाकीर्तिं दारपुत्रार्थसंपदः॥विदेशयानादाप्तार्थं यशो विद्यां जयं सुखम् ॥ ६ ॥ तत्रस्थितगुरोः पाके पापानां च हृतिर्यदा ॥ दारपुत्रनृपक्रोधं बंधूनां मरणं तथा ॥ ७ ॥ बुद्धिभ्रंशं पदभ्रंशं कार्यविघ्नकरं तथा॥ चौराग्निदारपीडां च कुरुते नात्र संशयः ॥ ८ ॥

त्रिकोण ५।९ गत गुरुकी दशा शुभग्रहोंके अंतरमें बडासुख होताहै शहरपनाह नगरद्वार आदि इमारत बने देवताओंकी तृप्ति यज्ञ यजनादिसे करे ॥ ५ ॥ ऐश्वर्य बडे बडी कीर्ति

होवे स्त्री, पुत्र, धन, संपत्ति होवै परदेशगमनसे धनप्राप्ति, यश, विद्या, विजय, और सुख मिलें ॥ ६ ॥ त्रिकोणगत गुरुदशामें जब पापांतर आवे तब स्त्री, पुत्र, राजासे क्रोध, बधुजन मरण ॥ ७ ॥ बुद्धिकी गलती, पदकी हानि, तथा कार्यमें विघ्न, करे चौर, अग्नि, स्त्रीसे पीडा, मिले इसमें संदेह नहीं ॥ ८ ॥

स्वकुलाचारहीनं च परदाराभिमर्शनम् ॥ चांचल्यं मानहानिं च मणिविद्रुमनाशनम् ॥ ९ ॥ षष्ठाष्टमव्ययस्थस्य गुरोः पाके शुभेतरा ॥ करोति स्वकुलाचारहीनं राज्यार्थनाशनम् ॥ १० ॥ आत्मार्थबन्धुमरणं विदेशान्नृपलालनम् ॥ भूमिवादं मनोदुःखं व्याधीनां भयमेव च ॥ ११ ॥

अपने कुलाचारसे हीनता, पराई स्त्रीको कुदृष्टिसे देखना, चंचलता, मानहानि, राज्य और धनका नाश मिलताहै ॥ ९ ॥ छठे, आठवें, बारहवें, भावगत गुरुकी दशा पापांतरमें अपने कुलाचारसे हीनता राज्य एवं धनका नाश ॥ १० ॥ अपने निमित्त बधुजनका मरण, विदेशसे राजाका प्रेम, भूमिसंबधी विवाद, मनमें दुःख, रोगोंकी भयभी होताहै ॥ ११ ॥

गुरोर्नाशं गतस्यापि परिपाके महत्सुखम् ॥ देशग्रामाधिपत्यं च शुभभुक्तौ महद्यशः ॥१२॥ देहारोग्यकरं किंचिद्गजाश्वाद्यंबराणि च॥ सुष्टुभोजनमुल्लासं क्षीरदध्याज्यशर्कराः ॥ १३ ॥ तृतीयायगतस्यापि गुरोः पाके महद्यशः ॥सौम्यानां भुक्तिकाले तु वस्त्रवाहनभूषणम् ॥ १४ ॥ मणिविद्रुममुक्तादिकांचनाद्यम्बराणि च॥देशाधिपत्यं मंत्रित्वं लभते नात्र संशयः ॥ १५ ॥ तादृशस्य गुरोर्दाये पापभुक्तौ महद्भयम् ॥ आचारहीनं कुरुते स्वकुलोद्भवनाशनम् ॥ १६ ॥ विदेशवासं कष्टं च नानादुःखपरिभ्रमम् ॥ एवमादौ दशांते तु सुखंवाहनभोजनम् ॥ १७ ॥

अष्टमगत गुरुकी दशा शुभातरमें बडासुख देश गांवकी आधिपत्य ( मालकी ) और बडा यश मिले ॥ १२ ॥ तथा शरीरमें आरोग्यता, थोडी घोडे, हाथी आदि वस्त्र, उत्तम भोजन. हर्ष, दूध, दही, घृत, शक्कर मिलें ॥ १३ ॥ तीसरे, ग्यारहवें, गुरुकी दशा शुभातरमे बडायश वस्त्र, सवारी, भूषण ॥ १४ ॥ मणि, मूंगा, मोतीआदि रत्न, सुवर्णआदि धातु, वस्त्र, देशकी अधिकारिता, मंत्रित्व, निस्सदेह पावताहै ॥ १५ ॥ ऐसेही गुरुकी दशा पापातरमें बडीभय, आचारहीनता और अपने कुलवालेका नाश करतीहै ॥ १६ ॥ तथा परदेशवास, कष्ट, अनेकप्रकार दुःख, भ्रम, इत्यादिफल दशाके आदिमें और अतमें सुख, वाहन, भोजन देतीहै ॥ १७ ॥

धर्मस्थितगुरोर्दाये शुभभुक्तौ धनागमम् ॥ विद्यालाभं जयं सौख्यं दारपुत्रनृपात्सुखम् ॥१८॥ सर्वेषामुपकर्तृत्वं धनाधिक्यं महत्प्रियम् ॥ भोजनं पौष्टिकं चैव धर्मदारधनादिकम् ॥ १९ ॥ द्वितीयस्थगुरोः पाके पापभुक्तौ यदा तदा ॥ करोति दुःखबाहुल्यं राज्ञा हृतधनं तथा ॥ २० ॥ बंधुद्वेषं मनोद्विग्नं वाचिकन्दैन्यमेव च ॥ कुभोजनादिदुष्कर्मकुत्सितप्रेष्यभावताम् ॥२१॥ इति गुरुपाकान्तर्दशाफलम् ॥

नवमगत गुरुकी दशा शुभांतरमें धनकी आमद विद्याका लाभ, विजय, सुख, स्त्री, पुत्र, राजासे सुख मिले ॥ १८ ॥ सबका उपकार अपनेसे होवै, धन अधिक होवै, बडी प्रियता, पौष्टिक भोजन, और धर्म, स्त्री, धनादि मिलतेहैं ॥ १९ ॥ दूसरे गुरुकी दशा पापांतर जब आवै तब बहुत दुःख करतीहै राजा धन हरण करताहै ॥ २० ॥ बंधुजनोंमें वैर, मनमें उद्विग्नता, जबानीदीनता, कुभोजनआदि तथा दुष्कर्म, निंद्य, दूतताका भाव मिलतेहैं ॥२१॥ इति गुरुपाकान्तर्दशाफलम् ।

अथशनेरन्तर्दशाफलम् ।

केन्द्रस्थस्य शनेर्दाये यदा पापहृतिस्तदा ॥ स्थानच्युतिं प्रवासं च नृपचौराग्निपीडनम् ॥ १ ॥ तथाविधशनेर्दाये शुभभुक्तौ महत्सुखम् ॥ नृपाभिषेकमर्थाप्तिं देशग्रामाधिपत्यताम् ॥ २ ॥ फलमीदृशमादौ तु भुक्त्यंते रोगपीडनम् ॥ परापवादं बंधूनां मरणं धननाशनम् ॥ ३ ॥

केंद्रगत शनिकी दशामें जब पापग्रहोंका अंतर होवै तब स्थान हानि, परदेश वास, राजा, चोर, अग्निसे पीडन मिले ॥ १ ॥ ऐसे शनिकी दशा शुभांतरमें बडा सुख, राजकार्यमें अभिषेक, ( अधिकारिता ) धनप्राप्ति, देश, ग्रामका आधिपत्य ( मालकी ) मिले ॥२॥ ऐसे फल दशाके आदिमें होतेहैं अंतमें रोग पीडा, झूठा कलंक, बंधुजनोंका मरण, धननाश होताहै॥ ३॥

त्रिकोणस्थशनेर्दाये पितृपुत्रविनाशनम् ॥ पापभुक्तौ महत्कष्टं कर्मनाशमथापि वा ॥ ४ ॥ वाताक्षिमूलरोगं च स्वबंधुकलहं तथा ॥ उद्योगभंगं दुःखं च स्थलधान्यविनाशनम् ॥ ५ ॥ तथाविधशनेर्दाये शुभभुक्तौ महत्सुखम् ॥ राजपूज्यं कृषेर्लाभं धनधान्यविवर्द्धनम् ॥ ६ ॥ स्वबन्धुदारपुत्राणामारोग्यं भूषणादिकम् ॥ भृत्यमित्रार्थसंपत्तिं लभते धर्मसंग्रहम् ॥ ७ ॥

त्रिकोण ५ । ९ स्थित शनिकी दशा पापांतरमें पिताका तथा पुत्रका नाश, बडाकष्ट अथवा कर्मका नाश होवै ॥ ४ ॥ वातविकार, नेत्ररोग, मूलाधारमें रोग, अपने बांधवोंमे कलह, उद्योगभंग, दुःख और स्थलोत्पन्न अन्नका नाश होवै ॥ ५ ॥ त्रिकोणगत शनिकी दशा शुभांतरमे बडासुख, राजासे पूज्यता, कृषिकर्ममें लाभ, धन अन्नकी वृद्धि ॥ ६ ॥ अपने बांधव, स्त्री, पुत्रोंकी आरोग्यता, भूषणआदि मिलतेहै तथा सेवक, मित्र, धनकी सपत्ति और धर्मका संग्रह मिलताहै ॥ ७ ॥

षष्ठाष्टमव्ययस्थस्य शनेर्दाये शुभेतरा ॥ हतिर्दुःखं महत्कष्टं स्थाननाशं धनक्षयम् ॥ ८ ॥ गुह्यरोगं विषार्तिश्च ज्वरवह्निनृपाद्भयम् ॥ अत्याप्तबन्धुमरणमुद्योगस्य विनाशनम् ॥ ९ ॥ षष्ठाष्टमव्ययस्थस्य शुभपाके महत्सुखम् ॥ आरोग्यं कान्तिवृद्धिं च देशग्रामाधिपत्यताम् ॥ १० ॥

छठे, आठवें, बारहवें, शनिकी दशा पापांतरमें दुःख, बडाकष्ट, स्थाननाश, धनका क्षय ॥ ८ ॥ गुह्यस्थानमे रोग, विषकी भय, ज्वर, अग्नि राजासे भय, अतिकृपा करनेवाले बंधुका मरण और उद्योगका नाश होताहै ॥ ९ ॥ ऐसे ६ । ८ । १२ गत शनिदशा शुभांतरमें बडा सुख, निरोगिता, कांतिकी वृद्धि और देश ग्रामकी मालकी मिलतीहै ॥ १० ॥

तृतीयलाभराशिस्थशनेः शुभहृतिर्यदा ॥ पाके शुभफलं प्रोक्तं नृपलालनभूषणम् ॥ ११ ॥ तृतीयलाभराशिस्थशनेः पापहृतिर्यदा ॥ पाके धनार्तिं दुःखं च भ्रातृवर्गविनाशनम् ॥ १२ ॥ विदेशयानं कलहं वैकल्यं भृत्यनाशनम् ॥ कुभोजनं परप्रेष्यं कुस्त्रीसंगमनं लभेत् ॥ १३ ॥

तीसरे, ग्यारहवे, शनिकी दशामें पापांतर जब होवै तब शुभफल कहाहै राजासे (लाड) प्रेम तथा भूषण मिलें ॥ ११ ॥ ३ । ११ भावगत शनिदशा पापातर जब होवै तब धनप्राप्ति और दुःख, भ्रातृवर्गका नाशभी होताहै ॥ १२ ॥ तथा विदेशगमन, कलह, विकलता, सेवकका नाश, कुभोजन, पराया दूतत्व, निंद्य स्त्रीका गमन मिले ॥ १३ ॥

धनस्थितशनेः पाके यदा पापहृतिर्भवेत् ॥ राजदण्डं महाविघ्नं कारागृहनिरोधनम् ॥ १४ ॥ उत्साहभंगं देहार्तिं ज्वरातीसारपीडनम् ॥ राज्यनाशं गवाश्वानां मरणं वाहनाद्भयम् ॥ १५ ॥ द्वितीयस्थशनेः पाके शुभभुक्तौ मनोहढम् ॥ उपकर्तृत्वमन्येषां

द्यूतविद्याविनोदनम् ॥ १६ ॥ गानकेलिरहस्यं च भोजनांबरभूषणम् ॥ उद्योगसिद्धिं राज्याप्तिं मणिविद्रुमकांचनम् ॥ १७ ॥ इति शनिपाकान्तर्दशाफलम् ॥

धनभावगत शनिकी दशामें जब पापांतर होवै तब राजासे दण्ड मिले, बडा विघ्न होवै, कैदमें रोका जावै ॥ १४ ॥ उत्साहभंग होवै, देहमें पीडा, ज्वर अतिसारकी पीडा होवै॥ १५॥ दूसरे शनिकी दशा शुभांतरमें मन दृढ रहे, औरोंका उपकार, अपनेसे होवै, जुवाकी विद्याका विनोद होवै ॥ १६ ॥ गायन क्रीडाका रहस्य भी मिले, भोजन, वस्त्र, भूषण, उत्तम मिलें उद्यम सफल होवै, राज्य मिले, मणि, मूंगा, सुवर्णका लाभ होवै ॥ १७ ॥ इति शनिपाकान्तर्दशाफलम् ॥

अथ बुधांतर्दशाफलम् ।

केन्द्रस्थितस्य सौम्यस्य दशायां पापिनां हृतौ ॥ कर्मविघ्नं महादुःखं मनश्चांचल्यमेव च ॥ १ ॥ उत्साहभंगं गोभूमिहिरण्याम्बरनाशनम् ॥ स्थानच्युतिं महाद्वेषं विद्यानाशं लभेत्तदा ॥२॥ शुभभुक्तौ बुधस्याथ पापकेन्द्रगतस्य तु॥ वैवाहिकं यज्ञकर्म दानधर्मजपादिकम् ॥ ३ ॥ ज्ञानाधिक्यं नृपात्प्रीतिं कृषिगोभूमिवर्धनम् ॥ मुक्तामणिप्रवालादिवाहनांबरभूषणम् ॥ ४ ॥

अब बुधदशांतरफल कहतेहैं केन्द्रगत बुधकी दशा पापग्रहोंके अंतरमें कर्ममें विघ्न, बडादुःख और मनचंचलभी होवै ॥ १ ॥ उत्साह भंग, गो, भूमि, सुवर्ण, वस्त्रका नाश स्थानसे च्युति महावैर और विद्याका नाशभी पावै ॥ २ ॥ केन्द्रगत निष्पाप बुधकी दशा शुभांतरमें विवाहकृत्य, यज्ञकर्म, दान, धर्म, जपादि होवैं ॥ ३ ॥ ज्ञानकी अधिकता होवै, राजासे प्रसन्नता, कृषि, गो, भूमिकी वृद्धि तथा मोती, मणि, मूंगा आदि और वाहन, वस्त्र, भूषण मिलें ॥ ४ ॥

ज्ञस्य त्रिकोणयुक्तस्य दशायां पापिनां हृतौ ॥ दारपुत्रार्थनाशं च कर्मनाशं मनोरुजम् ॥ ५ ॥ कृषिवाणिज्यनाशं च बंधुनाशमथापि वा ॥ पादभंगं महाद्वेषं बंधुद्वेषं लभेन्नरः ॥ ६ ॥ तथा विधज्ञस्य पाके शुभभुक्तौ नृपात्प्रियम् ॥ आरोग्यमतिसौख्यं च सोमपानादिकं सुखम् ॥ ७ ॥ स्वनामांकितपद्यानि नामद्वयमथापि वा ॥ भोजनांबरभूषाप्तिं नरेशत्वं लभेन्नरः ॥ ८ ॥

त्रिकोणगत बुधदशा पापांतरमें, स्त्री, पुत्र, धननाश, कर्मनाश, मनमें रोग ॥ ५ ॥ कृषि व्यापारका नाश अथवा बंधुनाश, पैरोंका टूटना, बडा वैर मिलतेहैं ॥ ६ ॥ त्रिकोणगत बुधदशा शुभांतरमें राजासे प्रेम, आरोग्यता, अतिसौख्य, सोमपानादि सुख ॥ ७ ॥ अपने नामके श्लोक, कविता, अथवा उपाधि ( अधिकारी ) नाम भोजन, वस्त्र, भूषण और राजत्व, मनुष्य पाताहै ॥ ८ ॥

षष्ठाष्टमगतज्ञस्य परिपाके तु पापिनाम् ॥ हृतौ चौरारिपीडां च ज्वरातीसारपीडनम् ॥ ९ ॥ स्ववंधुमरणं क्लेशं भृत्यस्त्रीपुत्रनाशनम् ॥ विवादं विग्रहं सर्वैर्बन्धुभिर्लभते नरः ॥ १० ॥ तथा विधाब्जपुत्रस्य शुभभुक्तौ महद्यशः ॥ आरोग्यं कांतिलाभं च देवभूसुरतर्पणम् ॥ ११ ॥ दशादौ फलमेवं स्याद्भुक्त्यंते सुखनाशनम् ॥ गोमहिष्यादिपीडां च वाक्पारुष्यं नृपाद्भयम् ॥ १२ ॥

छठे, आठवें, भागवत बुधकी दशा पापांतरमें चोरभय शत्रुभय, ज्वरातीसाररोग पीडन ॥ ९ ॥ अपने बंधुका मरण, क्लेश, सेवक, स्त्री पुत्रोंका नाश, कलह, युद्ध, सब बांधवोंके साथ मिलताहै ॥ १० ॥ छठे, आठवे, बुधकी दशा शुभांतरमें बडा यश, आरोग्यता, कान्तिलाभ, देवता, ब्राह्मणोंको तृप्त करना ॥ ११ ॥ ऐसे फल दशाके आदिमें होतेहैं अंतमें सुखका नाश, गो, भैस आदिकी पीडा, वाणीकी कठोरता और राजासे भय होतीहै ॥ १२ ॥

तृतीयायगतज्ञस्य शुभभुक्तौ शुभं भवेत् ॥ मनोधैर्यं मनोत्साहं विदेशाद्द्रव्यसंचयम् ॥ १३ ॥ विद्याजयं नृपात्प्रीतिं भोजनं पौष्टिकं तथा ॥ यज्ञवैवाहिकं कर्म पुराणश्रवणादिकम् ॥ १४ ॥ तथाविधज्ञस्य पाके पापभुक्तौ महद्भयम् ॥ भ्रातृवर्गविनाशं च वैक्लव्यं नृपपीडनम् ॥ १५ ॥ चौरारिवह्निभीतिश्च कुस्त्रीभूतादिसेवनम् ॥ कर्महीनं कृषेर्नाशं गजाश्वानां च पीडनम् ॥ १६ ॥

तीसरे, ग्यारहवें, बुधकी दशा शुभांतरमें शुभफल होताहै मनको धैर्य, मनमें उत्साह, परदेशसे धनसचय ॥ १३ ॥ विद्यासे विजय, राजासे प्रसन्नता. पौष्टिक भोजन, यज्ञ, विवाह आदि कर्म और पुराण श्रवण आदि फल होतेहैं ॥ १४ ॥ तथा ३।११गत बुधदशापापान्तरमें बडीभय भ्रातृवर्गका विनाश नपुंसकता राजासे पीडा ॥ १५ ॥ चोर, शत्रु अग्नि भीति, निन्द्य स्त्री संग, भूत आदिका पूजन, कर्महीनता, कृषिका नाश, हाथी घोडाओंका पीडन, ऐसे फल होतेहै ॥ १६ ॥

धनस्थिताब्जपुत्रस्य परिपाके शुभेतरा ॥ करोति राजदण्डं च बंधनं निगडं तथा ॥ १७ ॥ विपार्तिं बंधुविद्वेषं कृषिगोभूमिना-

शनम् ॥ शत्रुत्वं सकलैः सार्द्धं नित्याचारविवर्जनम् ॥ १८ ॥ द्वितीयस्थस्य सौम्यस्य परिपाकेऽर्थलाभभाक् ॥ शुभभुक्तौ महाप्रीतिं देवभूसुरतर्पणम् ॥ १९ ॥ अध्वरादिमहत्कर्म दानहोमजपादिकम् ॥ बंधुपूज्यं महोत्साहं विद्यालाभं च विन्दति ॥२०॥

इति बुधपाकान्तर्दशाफलम् ।

द्वितीय भावगत बुधदशा पापांतरमें राजासे दंड बंधन कैद ॥ १७ ॥ विषसे पीडा, बंधुजनके साथ वैर, कृषि, गो, भूमिका नाश, सबके साथ शत्रुता, नित्याचारसे राहित्य मिले ॥ १८ ॥ दूसरे बुधकी दशा शुभांतरमें धनलाभवाला होवै, बडी प्रसन्नता रहे. देवता ब्राह्मणोंकी तृप्ति करे ॥ १९ ॥ यज्ञआदि बडे कर्म, दान, हवन, जप आदि होवें, बंधुवर्गसे पूज्यता बडा उत्साह और विद्यालाभ, मनुष्य पाताहै ॥ २० ॥ इति बुधपाकान्तर्दशाफलम् ॥

अथ केतोरंतर्दशाफलम् ।

केतोश्चतुष्टयस्थस्य यदा पापहृतिस्तदा ॥मानभंगं महाद्वेषं नृपचौराग्निपीडनम् ॥ १ ॥ मातृनाशं तदीयं वा दारपुत्रविनाशनम् ॥ कर्मनाशं पदभ्रंशमकस्मात्कलहो भवेत् ॥ २ ॥ केतोस्तथाविधस्यापि शुभभुक्तौ नृपात्प्रियम् ॥ देहारोग्यकरं सौख्यं बंधुभिश्च समागमम् ॥ ३ ॥ भोजनांबरभूप्राप्तिमादौ चांते मनोरुजम् ॥ उद्योगभंगं कामार्तिं स्वकुलोद्भवनाशनम् ॥ ४ ॥

अब केतुके अंतर्दशाफल कहतेहैं केन्द्रगत केतुदशा पापांतरमें मानहानि, बडा वैर, राजा, चोर, अग्निसे पीडा, ॥ १ ॥ माताका नाश, अथवा उसीका नाश, स्त्रीपुत्र विनाश, कर्मका नाश पदसे गिरना और अकस्मात्कलह होवे ॥ २ ॥ केन्द्रगत केतुकी दशा शुभांतरमें राजासे प्रीति, देहमें नीरोगिता, सुख, बंधुवर्गसे मेलन ॥ ३ ॥ भोजन, वस्त्र, भूषणप्राप्ति, इतने फल दशाके आदिमें होतेहैं अंतमें मानसीरोग, उद्यमहानि, कामदेवकी पीडा, और अपने कुलवाले किसीका नाश होवे ॥ ४ ॥

त्रिकोणराशियुक्तस्य केतोर्दाये शुभेतरा ॥ हृतिस्तदा मनस्तापं करोति विविधापदम् ॥ ५ ॥ पुत्रवर्गादिमरणं पित्रोर्नाशमथापि वा ॥ स्थानार्थयोस्तथा नाशं भृत्यबंधुविरोधनम् ॥ ६ ॥ शुभग्रहाणां केतोस्तु परिपाके हृतिर्यदा ॥ कृषिगोभूमिलाभं च विद्याबंधुसमागमम् ॥ ७ ॥ भोजनांबरसौख्यं च भुक्त्यादौ फलमीदृशम् ॥ भुक्त्यंते स्थानचलनमकस्मात्कलहं वदेत् ॥ ८ ॥

त्रिकोणगत केतुदशा पापांतर होनेसे मनमें संताप अनेक प्रकार आपत्ति करतीहै ॥ ५ ॥ पुत्रवर्गादिका मरण अथवा माता पिताका नाश, स्थान धनका नाश, तथा परिश्रमालस्य सेवक वर्गसे विरोध होवे ॥ ६ ॥ त्रिकोणगत केतुदशा शुभांतर जब होवे तब दशादिमें कृषि, गो, भूमिका लाभ, विद्या, एवं बंधुजनका समागम ॥७॥ भोजन, वस्त्र, सुख होतेहैं, दशाके अंत्यमें स्थानसे विचलित होना और अकस्मात्कलह कहना ॥ ८ ॥

षष्ठाष्टमव्ययस्थस्य केतोर्दाये शुभेतरा ॥ हृतिः करोति मरणं विदेशं वा पदभ्रमम् ॥ ९ ॥ प्रमेहमूत्रगुल्मादिराजचौराग्निपीडनम् ॥ फलमादौ तदन्ते च यत्किंचित्सुखवर्द्धनम् ॥१०॥ भुक्तौ सौम्यग्रहाणां तु हृतौ स्त्रीपुत्रवर्द्धनम् ॥ धान्यांबरविभूषाप्ति मणिप्रवरकांचनम् ॥ ११ ॥ विप्रलंभं च शौर्यं च मौल्यादिपतनं तथा ॥ स्वबंधुजनशत्रुत्वं शिरोक्षिगुदपीडनम् ॥ १२ ॥

छठे, आठवें, बारहवें, केतुकी दशा पापांतरमें मरण, परदेश निवास, पदका भ्रम ॥९॥ प्रमेह, मूत्र, गुल्मादिरोग, राजा, चोर, अग्निसे पीडन, इतने फल दशाके आदिमें मिलतेहैं अंत्यमें थोडा सुखभी बढताहै ॥१०॥ ऐसे केतुकी दशा शुभांतरमें स्त्री, पुत्रवृद्धि, अन्न, वस्त्र, भूषणोंकी प्राप्ति श्रेष्ठमणि, सुवर्णलाभ ॥ ११ ॥ अंगीकारका संपादन न करना शूरता, मूल्य आदि गिरना (बेकदरी) अपने बंधुजनोंमें शत्रुता और शिर, नेत्र, गुदामें, पीडन होवे ॥१२॥

तृतीयलाभयुक्तस्य केतोः पाके परं सुखम् ॥ शुभभुक्तौ नृपात्प्रीतिं विचित्रांबरभूषणम् ॥ १३ ॥ वाहनं भूमिलाभं च गंधमाल्यानुलेपनम् ॥ दूरात्करागमं चैव स्वबंधुजनपूज्यताम् ॥ १४॥ पापभुक्तौ तथा जंतोः पापकर्मसमाचरेत् ॥ सर्वेषां विघ्नकर्तृत्वं बंधुभिस्त्यक्तजीवनम् ॥ १५ ॥ परप्रेष्यं कुवस्त्रं च भुक्त्यादौ फलमीदृशम् ॥ भुक्त्यंते सुखमाप्नोति दारपुत्रधनागमम् ॥ १६ ॥

तीसरे ग्यारहवे भावगत केतुकी दशा शुभांतरमें परमसुख, राजाकी प्रसन्नता, अनेकप्रकारके वस्त्र भूषण ॥ १३ ॥ वाहन, भूमिका लाभ, चंदन, पुष्पादि सुगंधिलेपन, दूरसे करकी आमद, अपने बंधुवर्गसे पूज्यता मिलतीहै ॥ १४ ॥ पापांतरमें जीवकी हिंसा आदि पापकर्म करे सबका विघ्न करनेवाला होवै बन्धुजनसे परित्यक्तता ॥ १५ ॥ पराई दूतता, कुवस्त्र, इतने फल दशाके आदिमें मिलतेहैं दशांतरमें सुख, स्त्री, पुत्र, धनका आगम होवै ॥ १६ ॥

धनास्थितध्वजस्यापि परिपाके शुभेतरा ॥ करोति विविधं दुःखं भैक्ष्यमन्नं मनोरुजम् ॥ १७ ॥ पुत्रमित्रकलत्राणां नाशनं महदा-

पदम् ॥ राज्ञा चौरेण वा वित्तं ह्रियते बंधुनाशनम् ॥ १८ ॥ शुभभुक्तौ धनाप्तिं च विद्यावादजयावहम् ॥ परोपकारं सर्वेषां भोजनांबरभूषणम् ॥ १९ ॥ भुक्त्यादौ फलमेवं स्यादंते किंचिद्धनव्ययम् ॥ वाक्पारुष्यं मनोद्वेगं प्रवृत्तेर्भंगमेव वा ॥ २० ॥ इति केतुपाकान्तर्दशाफलम् ॥

द्वितीयभावगत केतुदशा पापांतरमें अनेक प्रकार दुःख, भिक्षाका अन्त, मनमें रोग ॥ १७ ॥ पुत्र मित्र स्त्रियोंका नाश, बडी आपत्ति मिले, राजासे चोरसे धन हरण होवै, बंधुनाशन होवै ॥ १८ ॥ शुभांतरमें धनप्राप्ति, विद्या, विवादमें जयमिले सबका उपकार होवै, भोजन, वस्त्र, भूषण मिलें ॥ १९ ॥ दशाके आदिमें ऐसे फल होतेहैं अंतमें थोडा धन व्यय होवै, वाणीकी कठोरता, मन उद्विग्न और कार्यप्रवृत्तिका भंग होवै ॥ २० ॥ इति केतुपाकान्तर्दशाफलम् ॥

अथ शुक्रांतर्दशाफलम् ।

केन्द्रस्थितस्य शुक्रस्य सौम्यानां तु हृतिर्यदा ॥ राज्याप्तिं राजसन्मानं यानांबरविभूषणम् ॥ १ ॥ उत्साहं कीर्तिसंपत्तिस्त्रीपुत्रधनसंपदः ॥ भाग्योत्तरं मनोधैर्यं राजद्वाराधिपत्यताम् ॥ २ ॥ तथाविधस्य वाऽच्छस्य पापभुक्तौ धनक्षयम् ॥ कुभोजनं कुवस्त्रं च शुभकर्मविनाशनम् ॥ ३ ॥ भुक्त्यादौ फलमेवं स्यादंते शोभनमादिशेत् ॥ गृहगोभूमिलाभं च दूरदेशाद्धनागमम् ॥ ४ ॥

अब शुक्रदशांतरफल कहतेहैं केन्द्रगत शुक्रदशा शुभग्रहोंके अंतर जब होवै तब राज्य, राजसन्मान, सवारी, वस्त्र, भूषण ॥ १ ॥ उत्साह, कीर्ति, संपत्ति और स्त्री, पुत्र, धनकी संपत्ति होवै ॥ २ ॥ केन्द्रगत शुक्र पापांतरमें धनहानि, कुभोजन, कुवस्त्र, शुभकर्मका नाश होताहै ॥ ३ ॥ इतनेफल दशाके आदिमें होतेहैं अंतमें शुभफल कहना कृषि, गो, भूमिलाभ, दूरदेशसे धनकी आमद होवै ॥ ४ ॥

त्रिकोणस्थस्य शुक्रस्य शुभभुक्तौ शुभक्रिया ॥ देवभूसुरभक्तिश्च सुतदारविवर्द्धनम् ॥ ५ ॥ यज्ञादिकर्मलाभं च गोभूषणमथो जयम् ॥ आरोग्यं देहकांतिं च चिंतितार्थमनोरथम् ॥ ६ ॥ तथाविधस्य शुक्रस्य पापभुक्तौ मनोरुजम् ॥ अनारोग्यममर्यादं नृपचोराग्निपीडनम् ॥ ७ ॥ कुस्त्रीसंगं कुवार्तां च बंधुद्वेषं मतिभ्रमम् ॥ दुःस्वप्नं मौलिपतनमपकीर्तिं लभेन्नरः ॥ ८ ॥

त्रिकोणगत शुक्रकी दशा शुभांतरमें शुभकार्य, देवता ब्राह्मणकी भक्ति, पुत्र, स्त्रीकी वृद्धि ॥ ५ ॥ यज्ञादिकार्यका लाभ गो, भूषण, संग्राममें विजय, निरोगिता, शरीरकी कांति वृद्धि, मनकी अभिलाषा पूर्ण होतीहै ॥ ६ ॥ त्रिकोणगत शुक्रदशा पापांतरमें मानसीरोग, तथा अनेकरोग, अमर्यादाके काम, राजा चोर, अग्निसे पीडन ॥ ७ ॥ निन्द्य स्त्रीका संग, निषिद्ध-वार्त्तामें प्रवृत्ति, बंधुजनसे वैर, बुद्धिभ्रम, दुष्टस्वप्न देखने, शिरोगत श्रेष्ठ मनुष्यका गिरना और अपयश होवै ॥ ८ ॥

पाके शुक्रस्य दुःस्थस्य शुभभुक्तौ महद्यशः ॥ राजसन्मानमर्थाप्तिं पुत्रस्त्रीधनसंपदः ॥ ९ ॥ वस्त्रवाहनभूप्राप्तिमादौ चान्ते मनोरुजम् ॥ बन्धुद्वेषं गुरोर्नाशं स्वकुलोद्भवनाशनम् ॥ १० ॥ शुभग्रहाणां भुक्तौ तु देहारोग्यं महत्सुखम् ॥ परान्नं पट्टवस्त्राप्तिं गंधमाल्यविभूषणम् ॥ ११ ॥ भुक्त्यादौ फलमेवं स्यादंते क्लेशकरं भवेत् ॥ चौराग्निदेहपीडां च स्वबंधुजननाशनम् ॥ १२ ॥

दुष्टस्थान ६ । ८ । १२ गत शुक्रकी दशा शुभांतरमें बडायश, राजासे सन्मान, धनप्राप्ति, पुत्र, स्त्री, धनकी संपत्ति ॥ ९ ॥ वस्त्र, वाहन, भूषणप्राप्ति, ऐसे फल दशादिमें होतेहैं अंत्यमें मानसीरोग, बंधुजनसे वैर, गुरुजनका नाश, अपने कुलवालेका नाश होताहै ॥ १० ॥ ऐसे शुक्रदशा शुभांतरमें देहमें निरोगिता, बडासुख, परान्न, रेशमी वस्त्रोंकी प्राप्ति, चंदन, पुष्प, भूषण, मिलतेहैं ऐसे फल दशाके आदिमें होतेहैं अंतमें क्लेश करनेवाली होतीहै चोर, अग्नि, भय, शरीरपीडा, और अपने बंधुजनका नाश होताहै ॥ ११ ॥ १२ ॥

तृतीयायस्थशुक्रस्य परिपाके शुभेतरा ॥ हानिर्दुःखमवाप्नोति धनधान्यविनाशनम् ॥ १३ ॥ उद्योगभंगं क्लेशं च चौराग्निनृपपीडनम् ॥ भूमिवादं स्वबंधूनां नाशनं स्वपदस्य च ॥ १४ ॥ तथाविधस्य शुक्रस्य शुभभुक्तौ महत्सुखम् ॥ नृपपूजां मनोधैर्यं देशग्रामाधिपत्यताम् ॥ १५ ॥ वाहनं भूषणाप्तिं च पुत्रस्त्रीभृत्यसंपदः ॥ प्रपारामतडागानां निर्माणं धर्मसंग्रहम् ॥ १६ ॥

तीसरे ग्यारहवें शुक्रकी दशा पापांतरमें दुःख पाताहै धन अन्नका नाश ॥ १३ ॥ उद्यमभंग, क्लेश, चोर, अग्नि, राजासे पीडन, भूमिविषय विवाद, बंधुजनकी हानि और अपने पदकीभी हानि होतीहै ॥ १४ ॥ ऐसे ३ । ११ भावगत शुक्रकी दशा शुभांतरमें बडासुख, राजासे पूज्यता, मनमें धैर्य, देश, एवं गावका आधिपत्य ( मालकी ) ॥ १५ ॥ वाहन, भूषणोंकी प्राप्ति, पुत्र, स्त्री, सेवकोंकी वृद्धि, प्याऊ बगीचा, तालाबका बनाना और धर्मका संग्रह होताहै ॥ १६ ॥

धनस्थस्यापि शुक्रस्य शुभभुक्तौ महत्प्रियम्॥दारपुत्रार्थलाभं च स्वबंधुजनरक्षणम्॥१७॥विद्याजयं मनोल्लासं देवभूसुरतर्पणम् ॥ यज्ञादिकर्मलाभं च लभेन्नामद्वयं तथा॥१८॥ धनस्थितस्य शुक्रस्य पापभुक्तौ भृशं वदेत्॥राजदण्डं मनोदुःखं त्त्हद्रोगाक्षिप्रपीडनम्॥१९॥विद्यावादं कृषेर्नाशं कर्महानिं पदभ्रमम्॥ वह्निचौरारिभीतिं च लभते नात्र संशयः॥२०॥इति शुक्रपाकान्तर्दशाफलम्।

इति श्रीसर्वार्थचिंतामणौ राहुकेत्वादिदशान्तर्दशाफल निरूपणोनाम षोडशोऽध्यायः ॥ १६ ॥

धनभावगत शुक्रकी दशा शुभांतरमें बडी प्रसन्नता होवै स्त्री, पुत्र, धनलाभ, अपने बं जनोंकी रक्षा ॥ १७ ॥ विद्यासे विजय, मनके उत्साह, देवता, ब्राह्मणोंका पूजन, यज्ञ आ कर्मका लाभ, तथा दो नाम ( अधिकारी दूसरा नाम ) पावै ॥ १८ ॥ धनगत शुक्रद पापांतरमे वारंवार राजदण्ड, मनमें दुःख, हृदय रोग, नेत्रपीडा ॥१९॥विद्यासम्बंधि विवा कृषिका नाश, कर्मकी हानि, पदमें भ्रम, अग्नि चोर शत्रुका भय निःसंदेह पाताहै ॥ २० ॥ इति शुक्रपाकान्तर्दशाफलम् ॥

इति श्रीसर्वार्थचिन्तामणौ माहीधरीभाषाया राहुकेत्वादिदशान्तर्दशाफलनिरूपणाध्यायःषोडशः १

---

## सप्तदशोऽध्यायः ॥ १७ ॥

अथ प्रकीर्णाध्यायः ।

यद्यज्जन्मनि नक्षत्रे वृद्धिभावमुपेयुषि ॥ तस्य श्रीरायुरारोग्यं भवत्येवं विनिश्चयः ॥ १ ॥ तिथ्यादिषु तथा चान्यं क्षये तस्मिन् क्षयो भवेत् ॥ तिथिरेकगुणा प्रोक्ता ऋक्षं दशगुणं भवेत् ॥ लग्नं लक्षगुणं प्रोक्तं तत्समूहे फलादिकम् ॥ २ ॥

जिसके जन्ममें नक्षत्र वृद्धिगत, अर्थात् ६० घटी पूर्ण रहकर दूसरे दिनभी चलाजावे औ जन्मसे पूर्वदिनमे उसका स्पर्श होजावै मतान्तरसे घटिकाओंमें बढता जो नक्षत्र है उसकोभ वृद्धिभाव कहसक्तेहैं ऐसेमें जिसका जन्म हो उसकी श्री, ( शोभा ) आयु नैरुज्यता, होती यह निश्चयहै ॥ १ ॥ तिथ्यादियोंमें भी ऐसाही फल कहना ऐसे क्षय तिथि नक्षत्रादियों जन्मवालेके उन श्री आदिका क्षय कहना, इसमें तिथिका फल एकगुण नक्षत्रका दशगुण लग्नका लक्षगुण कहाहै इन सबके समूहसे फलादि कहना ॥ २ ॥

केन्द्रस्थिता जन्मनि यस्य कस्य पापाश्च सर्वे विफलप्रदाः स्युः॥ कुर्वंति दारिद्र्यमनेकदुःखं श्वासक्षयप्लीहगुदोदरार्तिम् ॥ ३ ॥ पापग्रहे कर्मगतेति नीचे वक्रान्विते पापखगैः प्रदृष्टे ॥ नाशं कलत्रस्य वदंति नूनं मुनीश्वरास्तद्वदनेकशास्त्रैः ॥ ४ ॥ दुःखी मूढो लोकविद्वेषकारी काणः पंगुर्निर्धनो मानहीनः ॥ अल्पायुः स्यात्केंद्रगाः पापखेटा ब्रह्मद्वेषी चापकीर्तिश्च सर्वे ॥ ५ ॥

जिस किसीके जन्ममें पापग्रह केंद्रोंमें होवें तो सब पाप शुभफल नहीं देते, दरिद्रता, अने- दुःख, श्वास, क्षय, प्लीहा, गुदरोग उदररोग, करतेहै ॥ ३ ॥ दशमस्थानमें अतिनीचगत पग्रह वक्रगतियुक्त ग्रहोंसे दृष्ट होवे तो मुनीश्वर अनेक शास्त्रोंसे निश्चय स्त्रीका नाश करतेहै ४॥ समस्त पापग्रह केंद्रोंमें शुभरहित होनेमें दु खी, मूर्ख लोगोंमे विद्वेष करनेवाला, काणा, ( खोडा ) निर्धन, मानहीन, अल्पायु, ब्राह्मणोंका द्वेषी और अपकीर्तिवाला होताहै ॥५॥

शंकराचार्यमते तु—लग्ने माने सप्तमे चाथ बंधौ पापाः खेटा जन्मकाले तु सर्वे ॥ तिष्ठन्त्येते स्वल्पमायुष्प्रमाणं तेषामेको लग्नपो वा यदि स्यात् ॥ ६ ॥ तथापि तद्योगफलप्रमाणं तादृग्विधं स्यान्मनयो वदन्ति ॥ स्वनीचभागादि महीपयोगेप्येवं फलं दुःखितानिर्गतायुः ॥ ७ ॥ तथास्थिते जन्मनि यस्य कस्य बाल्ये च पित्रोर्मरणं च कष्टम् ॥ भिक्षाशनेनाप्युदरस्य पूर्तिस्तदा भवत्येव तदंगहानिः ॥ ८ ॥

शंकर नामा आचार्यका मतहै कि, लग्न दशम सप्तम और चतुर्थमे पापग्रह सभी जन्मकार्‍ होवै तो आयुका प्रमाण थोडा होवै यदि उनमें एकग्रह लग्नेशभी हो ॥ ६ ॥ तोभी उस गका फलप्रमाण मुनिजन उसी प्रकार कहते है यदि राजयोगभी होवै किन्तु राजयोगकारक अपने नीचांशादिकोंमें होवैं तोभी वही फल और दुःखित, गतायु होताहै ॥ ७ ॥ ऐसे द्रगत समस्त पापयोगमें जिस किसीका जन्म होवै तो बाल्यावस्थामें माता पिताका मरण र कष्टभी होवै भिक्षाका अन्न खायकरके पेटकी पूर्ति और उसकी अगकी हानि होतीहै॥८॥

स्वनीचभागादिमहीपयोगे जातेपि यस्यापि नरस्य कस्य ॥ केन्द्रत्रिकोणेषु शुभो यदि स्यात्तद्राजयोगं सफलं वदंति ॥ ९ ॥ स्वांशेक्षिते लग्नगते क्रमांशे जीवेन दृष्टे धनराशिपेन ॥ स्वनीचभागादिमहीपयोगे जातोपि भूमेरधिपत्यमेति ॥ १० ॥ एवं

चिन्तामणौ प्रोक्तं वेंकटेशेन धीमता ॥ नीचभागादियोगार्थ राजयोगादिजं फलम् ॥ ११ ॥

यदि किसीका नीचांशकादिगत ग्रहजन्य राजयोग हुयेमें यदि केन्द्र त्रिकोणमें शुभग्रहभ होवै तो राजयोगका फल सफल होना कहतेहैं ॥ ९ ॥ अपने नवांशकमें शुभग्रहसे दृष्ट लग्नमें स्थित, वह राजयोग कर्ता ग्रह गुरुदृष्ट, धनेश दृष्ट, होवै तो पूर्वोक्त स्वनीच भागा राजयोगमें केंद्रस्थ पापग्रहोंमेंभी इनके फलको हटायके भूमिके आधिपत्यको प्राप्त होता ॥ १० ॥ इसप्रकार सर्वार्थचिंतामणिमें धीमान् वेंकटेशने नीचांशकादि योगार्थ सहित राज योगादिका फल कहाहै ॥ ११ ॥

अथ द्रेष्काणाः ॥ मेषद्वितीयो मिथुनः पूर्णः सिंहस्य प्रथमः खगद्रेष्काणः कर्कस्य द्वितीयतृतीयौ वृश्चिकस्य प्रथमतृतीयौ मीनतृतीयो व्यालः मकराद्यो निगडः ॥ १२ ॥

प्रथम फलादेशमें खगादि द्रेष्कोण कहेहैं उनकी संज्ञा कहते हैं कि मेषका दूसरा मिथुनके तीनों और सिंहका प्रथम खग द्रेष्काण कर्कके दूसरे तीसरे वृश्चिकका प्रथम तीसरा और मीन का तीसरा व्याल ( सर्प ) मकरका प्रथम निगड द्रेष्काण होतेहैं ॥ १२ ॥

रविभौमार्कजाः शुष्काः सजलौ चन्द्रभार्गवौ ॥ बुधवाचस्पती ज्ञेयौ सजलौ जलराशिगौ॥१३॥ कुम्भकर्कटकौ मीनमकरालि- तुलाधराः ॥ सजला राशयः प्रोक्ता निर्जलाः शेषराशयः॥१४॥

इति श्रीसर्वार्थचिंतामणौ प्रकीर्णभावफलनिरूपणो-
नाम सप्तदशोऽध्यायः ॥ १७ ॥

सूर्य मंगल शनि शुष्क चंद्रमा शुक्र गीलेहें बुध बृहस्पति जलराशियोंमें गीले अन्यराशियोंमें शुष्क हैं ॥ १३ ॥ कुंभ कर्क मीन मकर वृश्चिक तुला सजल अन्यनिर्जल राशिहैं ॥ १४ ॥ इति श्रीसर्वार्थचिंतामणौ माहीधरीभाषायां प्रकीर्णभावफलनिरूपणाऽध्यायः सप्तदशः ॥१७॥

---

अथ ग्रहफल-बाधककारकत्वम् ।

जन्मन्यर्को हिमकरसुतः सैंहिकेयः सुरेज्यः केतुश्चंद्रो दिनकर सुतो भार्गवो भूमिपुत्रः ॥ तापं कान्तिं क्षतिधृतिलयं कीर्तिहानिं प्रमोदं मृत्युं तारावलमनुदिनं संचरंति क्रमेण ॥ १ ॥

जन्ममें तारा जन्म नक्षत्रसे ९ के स्वामि फलसहित ग्रह इस क्रमसेहैं कि सूर्यसे ताप बुधसे प्रीति राहुसे हानि गुरुसे धारण केतुसे लय चंद्रमासे कीर्ति शनिसे हानि शुक्रसे सुख मंगलसे मृत्यु इस क्रमसे ताराहैं ॥ १ ॥

रबाधकत्वमाह ॥ क्रमाच्च रागद्विश-
गास्तदीशाः ॥ खरेशमांदिस्थितराशि-
वेचराः स्युः ॥२॥ द्युमणिरमरमंत्री भूसुतः
तनयारौ भार्गवो भानुपुत्रः॥ दिनकरदिविजे-
दाः सुरगुरुरिनसूनुः कारकाख्याविलग्नात् ॥३॥

होंका बाधकत्व कहतेहैं क्रमसे चरराशियोंके स्वामी ११ एकादशमें
स्वभावोंके सप्तममें क्रमसे राहु केतुस्थित राशिस्वामी अतीव बाधाका-
अब कारक कहतेहै. लग्नमें सूर्य दूसरा गुरु तीसरा मंगल पंच चंद्र बुध
सप्तममें शुक्र अष्टममें शनि नवममें सूर्य गुरु दशममें गुरु सूर्य बुध शनि
बारहवेंमें शनि कारक होतेहै ॥ ३ ॥ इति ग्रहप्र.लबाधककारकत्वनिरूपणम्॥

अथ कारकसूत्राणि।

ापारोग्यमनःशुचिरुचिज्ञानोदयकारकः सूर्यः ॥ १ ॥
ामरयशोदयामोदकांतिमुखलावण्यमातृमनःप्रसादकारक-
॥ २ ॥ पराक्रमविजयविख्यातिसंग्रामसाहससेनापत्य
त्वखड्गपरश्वधकुंतकुठारशतघ्नीभिंदिपालधनुर्बाणनैपुण्य-
तिगांभीर्यकामक्रोधशत्रुवृद्धि आग्रहावग्रहपरापवादस्वंत-
ूकारकः कुजः ॥ ३ ॥ संततिशांतिविनयभक्तिमातिमातु-
ज्ञातिगोत्रसमृद्धिगणितप्रज्ञावेदांतविद्याकारको बुधः ॥
वाग्धोरणीमंत्रराजतंत्रनैष्ठिकगजतुरगयानानिगमावबोध-
सपञ्जीवनोपायकर्मयोगसिंहासनकारको गुरुः ॥ ५ ॥
ाहित्यदास्यरसाद्भुतमदनयुवतिरतिकेलिविलासविचित्र-
ादर्यराजवशीकरणराजमुखवशीकरणगारुडेन्द्रजालमा-
ग्रमहदणिमाद्यैश्वर्यकाव्यकलासमभोगकलत्रकारकः
॥ ६ ॥ लोभमोहविषमपरपीडानियतिनैपुर्यदुर्मतिदारि-
मयवातवंचनमाहिषीयवागूकृष्णधान्यायुष्यजीवनोपा-
ः शनिः ॥ ७ ॥ ग्रहः पितृप्राज्ञचकारको राहुः ॥ ८ ॥

पिता. प्रताप. आरोग्य. मनकी' नीचभागादियोग
चामर. यश. दया. हर्ष. कांति
क्रम. विजय. ख्याति. संग्राम. केन्द्र त्रिकोणमें शुभ
तोप. भिंदिपाल. धनुष. बाण. अंशकमे शुभग्रहसे
अवग्रह. कलंक. स्वातंत्र्य. धाई. भूमि... स्वनीच भ
बुद्धि. मामा. बांधव ( बिरादर ) सगोत्र. सम्... को प्राप्त हो
वाणी. सवारी. मंत्र, राजतंत्रनिष्ठा, हाथी, घोडा, ... सहित
जीवनका उपाय, कर्मयोग, सिंहासनकारक गुरु है ॥ ५ ॥ ... प्रथम
तरस, कामदेव, स्त्री, कामक्रीडा, विलास, चित्रकांति, सुंदरता, ...
गारुडविद्या, इंद्रजालवाला, चातुरी, बडा छोटा होना आदि अष्टैश्वर्य, ...
स्त्रीकारक शुक्र है ॥६॥ मोह लोभ, विषम, परपीडा, निर्घातशब्दादि, निष्ठुर...
द्रता, दुर्दशा, रोग, वातरोग, ठगी, भेष, दलिया, कृष्णअन्न, आयु, जीवनका उप
है ॥७॥ यश प्रतिष्ठा और छत्र कारक राहुहै ॥ ८ ॥ इति सर्वार्थचिन्तामणौकार

श्रीवैक्रमे क्षितिरसांककुसम्मिते द्वे धर्माधिकारि पदधारि महीधरेण ॥
गूढार्थबोधनकरी विवृतिः स्वबुद्धया सद्भाषया व्यरचि टीहरिराजधान्याम
कृतार्थयन्तु विद्वांसो होरामर्मविशारदाः॥दृष्ट्वा श्रमं स्वसौजन्यात्पूरयन्तु त्रु
ये केचित्समदाः स्वीयाऽबोधेन विहसन्ति माम्॥ते छिद्रान्वेषणपरास्तुष्यन्तु
ममाभीष्टन्तु सर्वेषामुपकारोत्र कारणम्॥श्रेष्ठिने खेमराजाय ग्रन्थोयं निनिवे

॥ शुभमस्तु ॥ श्रीरस्तु ॥




पुस्तक मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालय-बं